भगवद्विभूति ग्रन्थमालायाः प्रथमं रत्नम् —

# श्रीसूर्यचरितं महाकाव्यम्

॥ श्रीः ॥

श्रीभगवद्विभूति-ग्रन्थमालायाम्—

प्रथमं रत्नम् ।

# श्रीसूर्यचरित-महाकाव्यम् ।



महामहोपाध्याय-पं० श्रीनित्यानन्दपन्त-महोदयैरन्यैश्च
मान्यैर्विद्वद्भिरनुमोदितम् ।

साहित्याचार्य-व्याकरण-तीर्थ-

० श्रीतारादत्तपन्त-विरचितम् ।

तेनैव टिप्पण्या सनाथीकृतम् ।

संशोधितं, प्रकाशितञ्च ।

सुप्रभात-संपादकेन श्रीकेदारशर्म्मणा सम्पादितम् ।

श्रीरामेश्वर पाठकेन तारायन्त्रालये मुद्रितम् ।

 मूल्यम् १)



# समर्पणम् ।

श्रीभगवते नमः ।

अखिल-ब्रह्माण्डनायकस्य भगवतः कृपया, गुरुजन महदनुग्रहेण, पितृ-जन-पुण्येन च मङ्गलपूर्वकमेव समाप्तिमितम्—भगवद्विभूति-वर्णनात्मकं सूर्यचरितप्रयोज्यमृतुचरितं महाकाव्यम्—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्, नक्षत्राणामहं शशी मासानां मार्गशीर्षोहम्, ऋतूनां कुसुमाकरः, सरसामस्मि सागरः स्थावराणां हिमालयः, वर्षाणां भारतं वर्षम्, खण्डानान्तु कुमारिका, स्रोतसामस्मि जाह्नवी ।

यावन्न जायेत पराऽवरेऽस्मिन्, विश्वेश्वरे द्रष्टरि भक्तियोगः,
तावत् स्थवीयः पुरुषस्य रूपम्, क्रियावसाने प्रयतः स्मरेत-
इत्यादिवचनान्यनुसरदेव,-

नराणाञ्च नरेन्द्रोऽहम्, गुरुर्देवो गुरुर्गतिः, जननीजन्मभूमिश्च—इत्यादि-वचनानुसारेण, नृप-गुरु-जनयितृरूपाभ्यो भगवद्विभूतिभ्य एव समर्प्यते ।

समर्प्यते च ज्ञानमूर्त्तिभ्यो मान्येभ्यो विद्वद्भ्य-इतिशम् ।
प्रसीदन्तु सर्वा भगवद्विभूतय-इति-विनयः

काशीस्थ-विश्व-विद्यालय-सम्बन्धि-

रणवीर-पाठशालाध्यापकस्य

श्रीतारादत्तपन्तस्य ।

# विषयानुक्रमो दृष्टव्यः, किं भूमिकया ?

तत्र प्रथमेसर्गे इष्ट-स्मरण-पूर्वकमनुबन्ध-चतुष्टय-निर्देशः,
गोललक्षणं तस्य ज्ञानोपायोऽवान्तरभेदा देशकालयोः,
देशकालज्ञानस्य परमावश्यकता शास्त्रे लोके च,
वर्त्तमानकालप्रशंसा कार्योत्साह-पोषिका,
वर्त्तमानकर्त्तव्य निर्देशः तत्र दृष्टान्ताः, देवदेवाः—

इति षोडशभिः श्लोकैर्देशकालजिज्ञासा विशदीकृता। ततश्च भूगोलखगोल-ज्ञानसाधन-भ्रमणोपयोपगि देववाहन,-वर्णनम्। भिन्नानां देव-वाहनानां कार्यमस्माकं कियदुपकारकम्, इत्यादि-निर्देशपूर्वकं, भारतीय-प्रजायास्त्रैकालिकी स्थितिः,—साम्राज्यमेषामनादिकालात् १००० कलिपर्यन्तं सर्वस्या भूमे रिति दर्शितम्।

द्वितीये भारतस्य लक्षणं, वर्णनं, भूमेः, नवखण्डविभागश्च।

तृतीये लङ्कातो भारतवर्षमात्रे वसन्तस्य कथं कदा कुत्र प्रादुर्भाव-इति विशदं दर्शितम्।

चतुर्थे ऋतूनां परस्परमैत्री विरोधश्च कस्य केनेति ऋतु-कुटुम्बकल्पनया सुष्ठु दर्शितम्,

वसन्तस्य व्यापकत्वञ्च शास्त्रार्थरीत्या साधितम्।

पञ्चमसर्गाच्चतुर्दश-सर्गपर्यन्तं, शास्त्रीयदृष्ट्या तत्तच्छास्त्रपदार्थाः प्रयोज्यप्रयोजकभाव—कार्यकारण-भावादयः, धर्मशास्त्रीयदृष्ट्या तद्वाक्यानामुपपत्तिः, राजनीतिदृष्ट्या कथं सार्वभौमोभवेयमिति-चिन्ता, ज्योतिःसंहिता-दृष्ट्या रवि-विधुचारानुसारेण वसन्तादि वर्णनम्, गोलाध्यायदृष्ट्या गोलएव काव्यरीत्या वर्णितः, आयुर्वेदानुसारेण त्रिविध-देश-द्विविध-काल-पञ्चविध-ऋतुवर्णनया दिन-चर्या, ऋतुचर्या, आरोग्यरक्षिका-इति दर्शितम्, रसिकदृष्ट्या, अर्थान्तर-संक्रमित-गुणीभूत-व्यङ्ग्यप्रधानतया, वसन्तादि वर्णन-स्याऽन्यवैलक्षण्येनास्वाद-जनकता सुष्ठु दर्शिता, पौराणिकदृष्ट्या भक्तिमार्गः सुष्टुदर्शितः, अन्तेच सर्गद्वयेनोपसंहारः कथं—दर्शित इति काव्यार्थ भावाना-विदो भवन्त एव प्रमाणम्।

—:(-)*(-):—

# विनिवेदना।

भूगोल-विज्ञाने, खगोल-विज्ञाने च संस्कृत-साहित्ये महती सामग्री वरीवर्ति। सा च संस्कृत-पण्डितानां शैथिल्येन, अनवधानतया च तिरोहिता, नास्माकं किमप्युपकृतिमापादयितुं प्रभवति। पाश्चात्याश्च तयैव सामग्र्या भारतीय-भूगोल-विद्यायां, खगोल-विद्यायाञ्च महतीं समुन्नतिमकार्षुः। अस्माकं देशे भगवान् वराहमिहिराचार्यो भूगोल-खगोल-विषये प्रचुरमन्वेषणं कृतवान्। ईशवीय-नवम-शतकोत्पन्नः कविसम्राट् राजशेखरोऽपि भूगोल-विज्ञान-विषयकं कमपि भुवनकोषमरीरचत्। तदनन्तरं शनैः शनैः प्रतिभानाशे समुपस्थिते, अवच्छेकता-युगे, पण्डितानां जटिल-शब्द-जालजडीकृतायां प्रतिभायाम्, भूगोल-विद्या, खगोल-विद्या, विज्ञान-विद्या च शनैः शनैः ह्रासमगमत्। यद्यपि ज्योतिःशास्त्रेषु वरीवर्ति साम्प्रतमपि भूगोलज्ञानम्, परन्तु तन्नितरां दुर्बलं गणितमात्रोपयुक्तञ्चेति संस्कृत-वाङ्मये वर्तमाना सैषा भूगोलविद्या सर्वथा विनाशमनुभवतीति नाविदितचरं सहृदयानां मार्मिकविदुषाम्।

संस्कृत काव्येषु कविकुलगुरोः कालिदासस्य प्रबन्धेषु भूगोलस्य कश्चन परिचयो वरीवर्ति। अन्येषु संस्कृतकाव्येषु नास्ति तादृशो भूगोल-परिचयः। भूगोल-विद्या, खगोल-विद्या, विज्ञान-विद्या च साम्प्रतकाले परमुत्कर्षं प्राप्ताः सन्ति। परन्तु दुर्भाग्यवशात् संस्कृतविदुषां नात्र दृष्टिर्दरीदृश्यते। यदि कविताद्वारा भूगोलादिलुप्तविद्यानामुद्धारः क्रियेत चेत्; सर्वथा तासां प्रचारे सौकर्यं सम्भवेत्। प्राच्यकालेऽपि छन्दोनिबद्धाः ज्योतिर्निबन्धाः, आयुर्वेदप्रबन्धाश्च साम्प्रतं जीवन्ति, प्रचरन्ति चेति संस्कृते भूगोल-विद्या-विषयकस्य कस्यचन काव्य-प्रबन्धस्य नितान्तमावश्यकताऽऽसीत्।

तथा च प्रस्तुतमिदं 'सूर्यचरितं' नाम महाकाव्यं, नितरामद्भुतम्, संस्कृत-संसारे नवीनम्, उपयुक्तम्, स्पृहणीयम्, समादरणीयञ्च महाकाव्यमिति निर्विवादं वक्तुं पारयेमहि। एतस्य कश्चनांशः सुप्रसिद्धे संस्कृत-पत्रे सुप्रभाते मुद्रित आसीत्। तदा प्रभृत्येवास्माकं तत्र

महती श्रद्धा, महानानन्दश्च प्रादुरासीत् । मया च सानुरोधं निवेदिताः श्रद्धेया, मान्याः, साहित्याचार्याः, व्याकरणाचार्याः, साहित्य-व्याकरणतीर्थाः, श्रीमन्तः श्रीतारादत्तपन्त-पर्वतीय—महोदयाः, काव्यमदो निर्मितवन्तः ।

एतस्य लेखकानां कविवराणां पण्डितप्रकाण्डानां श्रद्धेय-श्रीतारादत्तपन्त–महोदयानां विषये नास्ति विशेष-वक्तव्यमस्माकम् । यतस्तेषामस्माकञ्च विद्यते घनिष्ठतरः सम्बन्धः । तथापीदं साभिमानं सहर्षं वदयामो यत् मृत-कल्पे संस्कृत–समाजे पन्त–महोदय–सदृशानां विस्तृतज्ञानशालिनामध्ययनशीलानां गवेषक–विदुषां महतीत्रुटिर्विद्यते । किम्बहुना, ग्रन्थावलोकनेनैव तेषां विस्तृता प्रतिभा (General Knowledge) प्रतीयेत ।

एकमात्रमस्माकमियमेव विनिवेदना यत् विद्वाँस इदं सुचिरं सावधानञ्च विचारयेयुः । छात्राश्चावश्यकविषयममुं सुतरां निभालयन्तु ।

एतद्धि सर्वथा नवीनं संस्कृत-महाकाव्यम् । वयमेतस्य प्रचुरं प्रचारमभिलषामः ।

विनीतः—

श्रीकेदार नाथ शर्मा,
सुप्रभात—सम्पादकः,
मन्त्री,
संस्कृत-साहित्य समाजस्य

रणवीर–पाठशाला,
( हिन्दूविश्वविद्यालयः )
काशी
२ । ४ । २७

# FOREWORD.

It is a pleasure to have to introduce a book of intrinsic merit to the public. Original contributions to the Sanskrit literature have become so few and far between that it is gratifying to find a *Kavya* of a high poetic order seeing the light of day in this age of general decadence. The muse of Sanskrit poetry has so long been mute that, if for no other reason but for this, Sanskrit men of letters deserve every encouragement in attempts like these at our hands, if resusciation of Sanskrit poetry is wished for.

It is an interesting question, much worth an academic debate, to enquire if an ultra prosaic subject like that of *Surya Charit* can form the theme of a good *Kavya*. *Surya Charit* does not take its stand in episode of love or war which monopolise the romances and epics. It does not narrate the story of a feud between rival factions nor does it depict in glowing colours the sway of love on human mind. Its is an essentially prosaic, humdrum, matter. At least it appears so to one's mind. Common facts of physical science and astronomy have been taken up and poetically dealt with. The poem is a charming monograph on the cause, nature and beauty of the six seasons that adorn the Indian Sky. The author starts with the dictum that the *sun* is the life principle of the universe and the varying changes in the atmospheric phenomena of the world are due to its all controlling influence and power. Scientific books have been written on the subject, so also have poems. But whereas the former are devoid of the charm of poetry, the latter fail to observe the common decencies of scientific truth. In the present work, these two have been tried to be blended together. But it must never be forgotten that this is not a scientific treatise from the pen of a man of science and looked at from that standpoint it may fall to the ground. It has to be judged and weighed in the golden scale of poetry. The vividness of description, the easy flow of language, the charm of treatment, the skill of narration,—all reveal the hand of an artist. The function of poetry is to afford substantial joy by striking every chord of human heart. It may or may not add to the knowledge of the reader. But when it does both, it is the better on that account. The author is to be congratulated on his successful attempt and it is hoped that this poem will command the reception it deserves.

Benares City — GANESH DATT SHASTRI,
*April 2. 1927.* — M. A., LL. B.

# शुद्धि पत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | ४ | षगा | षेगा |
| १० | २२ | ॥ २७ ॥ | ॥ २७ ॥ युग्मम् |
| ११ | १४ | तम्पद्ः | सम्पद्ः |
| २१ | १८ | मध्यतः | मध्यतः |
| २२ | २३ | अनुकरण | अनुकरण |
| २२ | २६ | धर्मप्रसरः | धर्मप्रसरः |
| २८ | २२ | षायन् | षाढयन् |
| २९ | ८ | अद्धि | अङ्घ्रि |
| ३१ | ९ | धन | घन |
| ३१ | १८ | गुप्तरती | गुप्तरतो |
| ३२ | ४ | पर्ष | वर्ष |
| ३६ | २४ | शलिताम् | शालिताम् |
| ४० | १ | सम्मुखी | सम्मुखीन |
| ४८ | ६ | रू चिर | रुचिर |
| ४८ | २१ | सचना | सूचना |
| ५१ | १६ | यमाः ? | यमा ३ ? |
| ५३ | १ | चिन | चिनु |
| ५५ | २४ | सेसवि | सेवि |
| ५६ | १३ | तरू | तरु |
| ५६ | १४ | दलै | दलैः |
| ६४ | २४ | हिरूक् | हिरुक् |
| ७८ | २ | णायता | णीयता |
| ८६ | २५ | भारभ्य | मारभ्य |
| ९४ | ८ | याम्यो | याम्यो |
| ९५ | २४ | नभिनां | नाभीनां |
| ९६ | ११ | पर्मता | पर्वता |

॥ इति ॥

श्रीभगवते गणेशायनमः ।




# सूर्यचरितम् ।

## प्रथमः सर्गः ।

देशकालजिज्ञासा ।

जगदुपकृतये नानाऽनुरूप रूपाणि दर्शयन् यो नः ।
वितरति वाचं नन्दथुचर्वणचतुरान् विभावयेद्ब्रः सः ॥
प्रातःस्मरणीयगुणाः सुखलभ्याः सकललोकसंदृश्याः ।
मनसः स्थिरताकृतये स्मरामि भगवद्विभूतीस्ताः ॥
सूर्योदयास्तावच्छिन्नो भूगोलश्च खगोलकः ।
गतिं सूर्यस्य पश्यन्तु गोलजिज्ञासवोजनाः ॥ १ ॥
देशकालगतिः सूक्ष्मा स्थूला च परिदृश्यते ।
तयोर्हि कारणं सूर्यपरिस्पन्दं इहेष्यते ॥ २ ॥
क्षणादिकल्पपर्य्यन्ताः कालभेदास्तदीरिताः ।
परमाणवादिगोलान्ता देशभेदास्तदाश्रयाः ॥ ३ ॥
महाप्रमाणको देशो गोलशब्देन कथ्यते ।
महाप्रमाणकः कालः कल्पान्त इति गद्यते ॥ ४ ॥

---

१ ग्रन्थस्यैव मङ्गलमयत्वेपि मङ्गलोत्कर्षार्थः सूर्यशब्दस्यादौ प्रयोगः । २ स्वजन्यविभागप्रागभावावच्छिन्नं कर्म तदेव क्षणः ।

मध्यमौ काल देशौ तु दिनग्रामादयो मताः ।
द्व्यणुकः परमाणुश्च त्रसरेणुश्च सूक्ष्मकौ ॥ ५ ॥
न विना देशकालाभ्यां किञ्चित्कार्यं भवेदिति ।
ज्ञातव्यौ मनुजैर्नित्यं देशकालौ तु मध्यमौ ॥ ६ ॥
कथया व्यवहारेण भूचित्रेणापि वार्तया ।
स्थूलसूक्ष्मौ तु गणिताद्भ्यौ तत्त्वबुभुत्सुना ॥ ७ ॥
कस्मिन्काले मम जनिः कस्मिन्देशे च कीदृशे ।
व्यवहारे वर्त्तितव्यमिति मत्वा कृतिं चरेत् ॥ ८ ॥
तत्रकालः सप्तमोऽयं, मन्वन्तर उदाहृतः ।
तत्रापि कालिकालोय-मष्टाविंशः प्रकीर्तितः ॥ ९ ॥
यस्मिन्परीक्षा वीराणा—मष्टादशदिनात्मिका ।
कुरुक्षेत्रेऽभवत्कृष्ण-सान्निध्ये वीरलोकदा ॥ १० ॥
वीरत्वं कातरत्वञ्च, यस्मिन्भूलोकवासिनाम् ।
क्षत्राणां दर्शितं तस्मि-न्दृष्टिं कुरुत-मानवाः ॥ ११ ॥
अयं पुण्यतमः कालः, स्वल्पायासफलप्रदः ।
भूतेषु सौहृदाकाङ्क्षी, हिंसकानां भयप्रदः ॥ १२ ॥
निन्दां कुरुत गोघ्नानां, सर्वतोभावमास्थिताः ।
लेखनाद्भाषणाच्चापि, कलिर्वाक्कलहप्रियः ॥ १३ ॥
केवलन्नैवगोघ्नानां, प्राणिघ्नानाञ्च सर्वशः ।
अभावे भूतले जाते, किञ्चस्यादितिमन्महे ॥ १४ ॥
भारते कर्मभूमौ तु विशेषाद्धिंसयाऽधुना ।
रोगः शोकश्च दैन्यञ्च बुद्धिभ्रंशोनृणां कृतः ॥ १५ ॥
तस्माद् यतद्धं मनुजा नराणाम्, हिंसारतिर्येन न भारते स्यात् ।
गवादिकानां परिरक्षणार्थम्, दृष्टान्तभूता इह देवदेवाः ॥ १६ ॥

वृषद्ध्वजेनाऽथ खगध्वजेन, भूलोकस्वर्लोकसुखैकहेतू ।
पश्वण्डजौ दर्शितसत्वसारौ कृतौ जगत्पूज्यतमौ स्ववहात् ॥१७॥
मयूरहंसौ परदर्शनीयौ परं विघ्नौ नररक्षणीयौ ।
इतीव वाणीकमलासनाभ्याम्, निदर्शनायैव कृतौ स्ववाहौ ॥ १८ ॥
आखुःखनन् भूमितलं विलानि, विचित्ररूपाणि करोति यत्नात् ।
भूदुर्गवासं जगतीपतीनाम्, निदर्शयन् गूढतमं हि मन्त्रम् ॥१९॥
गुणज्ञतायाः परदैवतेन, विनायकेनाखुमयं स्वगेहम् ।
कृतं, मृदस्त्वाखुबिलस्य यज्ञे, राज्याभिषेके च महोपयोगः ॥२०॥
द्विजाः ! शशं रक्षत वाडवानाम्, राजा न कुप्येन्निजवाहनघ्ने ।
शशन्नसौ वेदयति प्रजेशान्, यत्प्राणबाधे शशत क्षणेन ॥ २१ ॥
गजांस्तुरङ्गान्करभान्खरांश्च, वाहान्नराणां किमुतामराणाम् ।
महोपकाराय विधातृसृष्टान् मूढोऽपिजानाति न हन्ति कोऽपि ॥२२॥
गवामभावे महिषीभवेन, दुग्धेन-तस्याऽपि सुदुर्लभत्वे ।
छाग्या हविःकर्म करोतु नित्य मित्यब्रमानं यमवह्निदेवौ ॥ २३ ॥
अजापयः सर्वगुणैरुपेतम्, तिक्तौषधीसेवनजातसत्वम् ।
कृष्णारजोधूलितमेव पीत्वा, नश्यन्ति रोगा जठरस्थिता ये ॥२४॥
एवं मृगाणामथवा पशूनाम् , गुणान्विदित्वा न नरः प्रहण्तुः ।
तत्रापि दुग्धादि-कृतोपकारान्, हत्वाऽमनुष्यो[1] भवितुं क इच्छेत् २५
न मानवानाङ्किलकर्म चैतत् वेदे यदुक्तन्त्वमनुष्यकेभ्यः ।
मनुर्दयालुर्निजशिष्यकेभ्यो हिंसानिषेधन्त्वदिश द्विशेषात्॥ २६ ॥
वयं मानवा भारतीया यमादीन्, सदाचारमूलान्सुगूढान्स्वधर्मान् ।
त्यजेम, प्रभो ? प्रेरयस्व त्वमेव, विशुद्धे दयार्दो न दीना भवेम ॥२७॥

भूतलं भारतीयानां सर्वमेवपुराभवत्
अधुना वैपरीत्येन कथं दूना वयं विभो ? ॥ २८ ॥

---

१ रक्षः पिशाचादिः ।

श्रूयन्ते हि पुराणेषु कथा भारतवासिनाम् ।
नृपाणां सार्वभौमानां विभो ? विश्वजयैषिणाम् ॥ २९ ॥

सार्वभौमनृपचिन्तया वयम्, चिन्तयाम सततं प्रजाहितम् ।
देश एव कलिकाल एष च दौष्ट्यमाचरति मानवान्प्रति ॥३०॥

मानवास्त्यजत मा कदाचन मानवीं सरणिं [1]मन्तमेदुराम् ।
मन्मथैकदमना हि दानवात्[2] जेतुमिच्छत शमैकमानसाः ॥ ३१ ॥

मानसैक्यमवलम्ब्यमीश्वरम्, भारतीयसुखदं नुताऽधुना ।
गोल एष मनुवंश्यभूभुजाम्, सृष्टितः कलिसहस्रकावधि ॥ ३२ ॥

*इति श्रीभगवद्विभूतिवर्णने सूर्यचरिते महाकाव्ये प्रथमः सर्गः ॥*

## द्वितीयः सर्गः ।

*अथ कुमारिकादेशवर्णनम् ।*

लौहित्य[3]सिन्धु[4]कमनीयनिवीतशोभम्
गङ्गाकलिन्दतनयारमणीयहारम् ।
कैलासशेखरमिमं हिमवद्भुजाढ्यम्-
यं सिंहला[5]सनमिति प्रवदन्ति विज्ञाः ॥ १ ॥

द्वेधा जलं भगवता निहितं समन्तात्-
अस्यैव सागरहिमालययोः समृद्ध्या ।

---

१ परिणामरमणीयाम् । २ मनुमार्गानुयायिनो मानवास्तद्विपरीतादानवाइत्यभिप्रायः । ३ लौहित्यो ब्रह्मपुत्रनदः । ४ सिन्धुः प्रसिद्धोनदः । इमौ द्वावपि मानसागतौ कुमारिकायाः पूर्वपरवाहिनौ । ३यसर्गं २३ श्लोकेद्र० । ६ सिंहल उपद्वीपः अस्मिन्नेवरावणराजधानी—१५ सर्गे द्रष्टव्यम् ।

अत्रैव षड्-ऋतव आजलधेर्हिमान्तम्-
आविर्भवन्ति जगतः परिपालनाय ॥ २ ॥

अत्रैव वर्षति यथातथमन्नहेतोः
पर्जन्य एषभगवान्तपतीत्थमत्र ।
कार्पास-धान्य गुड-गोरस-सम्पदत्र
अत्रैव पुष्पफलसंपदपीति वित्त ॥ ३ ॥

रत्नानि मौक्तिकनिभानि तथैव धातून्-
स्वर्णादिकाश्चसलिलानलवातपकान्
यन्माक्षिकादिकमुखानुपधातुसंज्ञान्
सूते ह्ययं सकललोकसुखान् पदार्थान् ॥ ४ ॥

एतेन भूमिरतुलाचलकाशिना यत्
स्वर्गौकसामपि पदानि दधाति नित्यम् ।
तत्सर्वलोकमणिरेष महार्णवेन
विष्वग्वृतश्चरणतस्त्वितिमे नु तर्कः[2] ॥ ५ ॥

सोयं विभर्त्यखिलरोगहरा नराणाम्
या ओषधीरमृतविन्दुभवा वदन्ति ।
ताभिर्नरो जगति नोपकृतिं क इच्छेत्
यस्मै भिषग्जडगुणाज्ञ इतीरयेत ॥ ६ ॥

नद्यो विभान्ति विपुलाचल चञ्चलायाः
पाषाण-ताडित-गुणाढ्य-जलाः समन्तात् ।
यत्सेवनेन मनुजा विरुजो बलाढ्या
अप्यन्यदेशजनुषः किमुतेह जाताः ॥ ७ ॥

---

१ ऋ कारैकदेशेन रेफेण सहश्रुत्या गुरुत्वम् । २ तर्के उत्प्रक्षणात्स्वभाववर्णनं फलितम् ।

यत्पर्वतेषु मलयाचल-सह्य-शैल-
माहेन्द्र-ऋक्ष-गिरि-वेङ्कट-पारियात्राः ।
सर्वर्त्तुनिर्वृतिकराः समशीततापा-
रोगघ्नवायुजल-जायु[1]-युताः समेऽपि ॥ ८ ॥
गोधूम-धान्य-यव-मुद्ग-मसूर-माष-
सिद्धार्थकादि मनुजस्य शरीरपोषम्
पर्जन्यजन्यवनघर्मविचित्रपाके-
ऽधोऽजतीह सततन्त्विह वर्षपाके ॥ ९ ॥
राकासुधाकर-कराः शरदीह चित्रम् ।
शस्ये पतन्ति सुधया परिपूरयन्तः ।
ऽधोद्गतं सकुसुमं तुषखण्डपात्रम्-
अन्नन्ततो भवति मेध्यतमन्तमोघ्नम् ॥ १० ॥
शान्ताः समाः सकरुणाः सम-भूतपालाः
आमुष्मिकैहिक-विचित्र-विचारशीलाः ।
अत्रत्यवंशजनुषो मनुजा नितान्तम् ।
अस्मिन्भवन्ति हि जगन्ति पुनन्ति नित्यम् ॥ ११ ॥
एतस्य वर्णनमहं हृदिधारणीयम्
भूगोलवर्णनविधौ सरलं करिष्ये ।
यावद्दिवाकराः प्रसरन्ति लोके ।
गोलः सएष इति विज्ञतमा विदन्तु ॥ १२ ॥
ऽधा सएष दिनरात्रिगतेर्विभागात्-
सूर्यस्य, पूर्वपर गोल इतीहयानः ।
पूर्वेऽस्तिभूरि वसुधा परगोलकेतु-
वर्षत्रयं भवति तद्ध्रुवतोऽप्युदीच्याम् ॥ १३ ॥

---

१ जायुरौषधम् ।

[1]मेरोश्चतुर्दिश मिलावृतवर्षमाहुः
वर्षत्रयन्तत उदक् त्रयमाहु रर्वाक्-
एकं पुरः परत एक मुदाहरन्ति ।
एवं वदन्ति नवभागयुतान्धरित्रीम् ॥ १४ ॥
तस्याः सएष नवमोऽनवमो गुणौर्यः ।
भागः समुद्र गिरिराजविभक्तसीमा ।
पूर्वत्र[2] चीन इति यस्य परे तुरुष्कः[3]
शास्त्रे प्रसिद्ध इति भारतवर्षनामा ॥ १५ ॥
तस्यास्तिमध्यमतमः किलवर्णनीयः
भागो जगत्सु विदितो हि कुमारिकाख्यः ।
सिन्धोः पुरस्थिततया किल विन्ध्यवत्वाद्
भाषासु हिन्दुसदनेन गतः प्रसिद्धिम् ॥ १६ ॥
विज्ञाः स्वयं वदत शिष्यगणेभ्य एवम् ।
विज्ञाय मे श्रममिमं सफलीकुरुध्वम् ।
भूवर्णनेन भगवान्स विराट् स्वरूपः
प्रीणातु मे प्रथमतः सभवत्स्वरूपः ॥ १७ ॥
इह जगति वसन्तस्त्वासमुद्राद्धिमान्तम् ।
उदगय + मनुकुर्वन् भारतीयप्रदेशान् ।
कुसुमकिसलयाद्यै रञ्जयन् रागपूर्णः
भ्रमति सहकुटुम्बः पालयन् सर्वलोकान् ॥ १८ ॥

*इति श्रीरविचरिते द्वितीयः सर्गः ॥*

---

१ ध्रुवो मेरु रित्येक एव पदार्थः । एवं गोलो ब्रह्माण्डश्च ।
२ पूर्वी चीन इति प्रसिद्धः । ३ टर्की इन् एशिया इति ।
+ अयनम् = अयः भावे-एरच्-इत्यच्प्रत्ययः ।

# तृतीयः सर्गः ।

*अथ ऋतुराज यात्रा ।*

ऋतुत्रयं केचिदुदाहरन्ति, पञ्चैव केचित्त्वपरे षडाहुः ।
शीतोष्णवर्षाभिदया त्रयः स्युः हेमन्तशीतैक्यकृतेस्तु पञ्च ।१।
सर्वत्र देशे न हि सर्व एव, प्रादुर्भवन्तीति विदाङ्कुरु त्वम् ।
सौरैः करै श्चित्रतरैः कु-पाके चिह्नं जगत्यां नियतन्त्वृतूनाम् ।।२।।
विभिन्नदेशेषु विभिन्नकाले, भिन्नोद्भिदामङ्कुरकोरकाभ्याम् ।
षण्णामृतूनामिहजृम्भितानाम्, ज्ञेयं चरित्रं मनुजैर्धरित्र्याम् ।।३।।
गोलार्द्धरेखाविगतेऽहिमांशौ, रात्रिन्दिवं तुल्यमतो वसन्तः ।
सर्वत्रलक्ष्यो ऽयनरेखयोः सः, मध्ये समासेन वहिर्विचित्रम् ।। ४ ।।
लङ्का ऋतूनां सदनं समेषाम् सदासमस्तत्र हि सौरतापः ।
समीरनीरे अपि तत्र शीत-मृदुत्त्व-युक्ते-नियतं नितान्तम् ।। ५ ।।
यदा रविस्तूत्तरतः प्रयातुम् प्रस्थातुकामो धनुषि स्थितोऽपि ।
तदैव केनाऽपि पथा समुद्रम् तीर्त्त्वा वसन्तो द्रविडेषु याति ।। ६ ।।
ततस्तु कर्णाटकमद्रकादीन् प्राच्याँस्तुदेशाञ्जलधे स्तटस्थान् ।
तथापरान् कौङ्कणकेरलादीन् , मधू रसालाङ्कुरितान्करोति ।।७।।
उन्मादयन्प्राणिगणं वसन्तो नवाङ्कुरोद्भेदकृतीरणेन ।
विपाचयन्कार्त्तिकवीजवापम् शस्यं जगत्सौख्यकरं यवादि ।। ८ ।।
प्राच्ये क्रमादेकपदे प्रसर्पन्नुदङ्मुखो विन्ध्यगिरिं विलङ्घ्य ।
नक्रस्थितेऽर्के सकलां भुवं स, व्याप्नोति माकन्दमहीरुहस्थः ।। ९ ।।

---

१ भूमौ विजातीयतेजः संयोगे । २ रेखामध्यस्थितेयं लङ्का ।
३ सर्वेषामृतूनां सूक्ष्मतया वसन्ते लीनत्वात् ।

अपूरयन्कुम्भगते तु कुम्भान् स्वसंपदा कौर्बेरतो समर्थान् ।
करोति पृथ्वी मतिमात्र नूत्नाम्, प्रवाल पीताम्बरराजमानाम् ॥१०॥
मीने पुनर्मीनसखस्य मित्रम् राजा ऋतूनां हिमवत्प्रदेशान् ।
नेपाल-कूर्माचल-गाढवालान्, यथासुनान्पञ्चनदान्प्रयाति ॥११॥
पूर्णं स्वरूपं समवाप्य तत्र माद्यन्स्वयं यत्त इव प्रसूनैः ।
विभात्ययं पर्वतपृष्ठसंस्थो, राजेव चित्राम्बरपल्लवान्तः ॥ १२ ॥
सम्पूर्णरूपः सहकारकेषु सर्ज्जाङ्कुरे वोधितरौ विभिन्नः ॥
वि[1]लक्ष्यरुपस्त्वथ सप्तलासु मधुर्विचित्रो गिरिमल्लिकासु । १३ ।
मधौ [2]मधु मोदमवाप्य तत्र, समाधवेनाथ सखित्वमिच्छन् ।
पर्णेन पाकस्य यवादिकानाम् पीताम्बरत्वाय हि माधवस्य[3] ॥१४॥
[4]यामनुं देशमवाप्य नूनम् स्वकल्पिताऽऽकल्पविचित्रमूर्त्तिम् ।
प्रपश्यतां यत्प्रमदा जनानाम् तं माधवं वर्णयतां शृणोति ॥ १५ ॥

निर्धूनितप्रबलभौमहिमो महीयान्
उत्फुल्लषोडश-सहस्र-लताबधूकः ॥
देदीप्यमान-नव-कौस्तुभभानुकान्ति-
रुद्भिन्नपल्लव-पटः सखि ! माधवोऽयम् ॥ १६ ॥

मधुःस्वमित्रं मदनं विचिन्त्य माद्यन्स्वयं माधव-दर्शनेन ।
उच्चैस्तरां कूजति पक्षिसंघ-व्याजेन, चित्रं वचनं विचिन्वन्॥१७॥
स माधवाऽन्वेषण तत्परः सन् भूस्थानदेशान्हिमवद्गुणाढ्यान् ।
पाकेन पीतान्सकलान् यवादेः, तन्वन् वृषाऽर्केविशती[5] विशालाम् १८

---

१ सप्तलानामकुसुमितत्वात् । २ मधौ चैत्रे, मधुर्वसन्तः
३ माधव शब्दो विष्णु वैशाखार्थकतयाश्लिष्टः ।
४ शतद्रोर्यमुनावधि यामुनोदेशो गोले द्रष्टव्यः ।
५ इकारोवितर्कार्थः प्रश्लिष्टः ।

विशालता मात्मन एव शक्तेः स सङ्गतो माधवधाम्नि तेन ।
प्रदर्शयन् युग्मगतेऽथभानौ करोति पीतान्सकणान्यवादीन् ॥१९॥

सरयू-गङ्गा-यमुना-शतद्रु-विपाशा-वितस्तासु ।
शुचि रिव शुचितां तन्वन् मूलान्वेषणा माधवः स शुचौ॥२०॥

यवकणपाकं कुर्वन् प्रसादयन् मानवान् स कश्मीरान्
गन्तुमना अपि भक्तो व्यग्रो गोधूमपाकेषु ॥ २१ ॥

यवादिपाको हि वसन्त-चिह्नम् निरूपितं विज्ञतमैः कवीन्द्रैः ।
अतो मधु यत्र यदा स्वलक्ष्म प्रकाशये त्तत्र निरूप्यते सः ॥२२॥

समानसस्याऽप्यथ दर्शनैषी कर्के रवौ तत्र गतिं विचिन्त्य ।
यातो दिविष्टे[1] विरलद्रुमे सः सवालुके मानसभक्तिरास्ते ॥२३॥

पद्मानि तत्र विकचानि सहंसकानि
सम्मादयन् मधुरयङ्क्लि माधवात्मा ।
सौरांशुभिः सुमधुरैः सुतनूँस्तरू न्सः
स्वल्पं वसन्ततिलकेन युतान् करोति ॥ २४ ॥

द्वेधाऽवसत्स किल तत्र द्विधाकृतात्मा-
वर्षर्त्तुमाधवतनू कलनेन धीरः ।
कामस्य पञ्चशर-कल्पनयैव पञ्च
मासाञ् छरत्समुदयं समवेक्षमाणः ॥ २५ ॥

स मानसे तीर्थवरे निमज्जन्, द्विधा भुजाभ्यां भरतस्य भूमिम् ।
श्लिष्यत्तदात्मीयतयैव तीर्थम् लौहित्यसिन्धूदितरूपकाभ्याम् ।२६

ददर्श तत्रैव तदैव तस्माद् द्रुतं भयातुं शतधा द्रवन्तीम् ।
शतद्रुनाम्नीं यमुनापरस्तात् सैशाल्मले[2] पञ्चनदे वहन्तीम् ॥२७॥

---

१ दिविष्टो=ह्रूणदेशः । २ शिमला इति प्रसिद्धः ।

समाकुल स्तत्र मधु[४] र्महात्मा सन्देशलेशं शरदे दिदेश ।
शतद्रुवक्त्रेण सुखस्थितायै समुद्रतीरस्थनिकेतनेषु ॥ २८ ॥
स्वयन्तु पूर्वोक्तनदौ[५] द्विधैव विगाहमानः प्रययौ प्रतीच्याम् ।
कश्मीरदेशान् रमणीयरूपान् तन्वन् ददर्शाऽथ शरत्प्रवृत्तिम् ॥२९॥

मृद्वीकां रसभरितां[१] विपाचयन्तीम्
पश्यन्तीं[२] परिणतशस्यदाडिमीञ्च ।
कश्मीरान्मुदितरान्वितन्वतीन्ताम्
सम्मेने मधुरपि हर्षिणीं[३] स्वकान्ताम् ॥ ३० ॥

यवादिपाकेन स्वयं प्रवृद्धो कश्मीरदेशेषु ततो वसन्तः ।
पुनः परावृत्य शरत्समृद्धया लीनः स तत्रैव विचित्ररूपैः ॥३१॥
लौहित्यमार्गेण गतोऽपि राजा हिमालयादुत्तरभागगेन ।
लासां, गतो हूणकराजधानीम् सम्मादय न्मद्यनिपानमत्तान् ॥३२॥
सिंहगे ग्रहपातौ स वसन्तः सर्वतो हिमचयैस्तुहिनांशोः ।
शम्भुशैलवसते र्विषयस्य सम्पदः पचति सुष्ठु यवाद्याः ॥ ३३ ॥
दिविष्ठदेशे बहुधोपसर्पन् क्वचिद्धिमाद्रेः शिखरादपश्यत् ।
प्रियां स्वकीयां परितः स्फुरन्तीम् हिमाद्रितो दक्षिणभूमिभागे ॥३४॥

विचित्रफल[६]भूषणां विविधनीरिणीं क्षीरिणीम्
सरःकमलशालिनीं कलमशालिनीं क्षेत्रकैः ।
नभो मुदिरमोचितं भुव मदर्दुरां तन्वतीम्
दिविष्ठनिलयो मधुः स शरदन्तिकिन्नीक्षते ॥ ३५ ॥

---

१ सञ्जातरसभरा मित्यर्थेन रसमयत्वमेव तस्या व्यज्यते ।
२ पश्यन्ती मित्यनेन पाकावशेषोगम्यते ।
३ अनेनशरद्वर्णनस्य प्रहर्षिणी मयता ज्ञाप्यते ।
४ चतुर्थसर्गे ६-२६-श्लोके द्र० । ५ देशविशेषणम् ।
६ पद्यमिदं वीजमेतद्ग्रन्थस्य ।

दिविष्ठविषयोऽधुना यवमसूरगोधूमकैः
सुपक्व-फलसंयुतै मधु-नीपीत आलक्ष्यते ।
अहो हिमसमागमो भवति तत्र चात्राधुना
शरत्स्फुरति सर्वतो भवति तेन पृथ्वी गुरुः ॥ ३६ ॥
शरत्स्फुरणचारुता मलिनचारुताको मधुः
क्वचित् क्षिपति चाऽऽत्मन स्तनुमिमां तनूकारिताम् ।
अहो प्रियसमागमान्मुदितया तया सङ्गतो-
रहः प्रियसमागमे व्यवहितिं क्वचित्काङ्क्षति ॥ ३७ ॥
क्वचित्समभव त्प्रभुर्मुकुलयन रसालाङ्कुरान्
क्वचिच्च तृणवीरुधः क्वचिदपीहे[१] धान्याङ्कुरान् ।
यवादिपरिपाकतः क्वचिदपीतिशक्तिं निजाम्
नचैव जनयन्मुहु र्भवति माधवं भावयन् ॥ ३८ ॥
माधवोऽथ मधुना स्मृत एव मार्गशीर्षवपुषा निजरूपम् ।
आस्थितो यवमसूरकणादे र्वृद्धिदा स्मरति माधवलक्ष्म्याः[२] ॥३९॥
मार्गशीर्षवपुषा स वसन्तस्त्वैक्य मिच्छति हरे[३] र्वचनेन ।
भूतलं हरितयन्नथ लङ्काम् सम्प्रयाति शरदा सहितः सन् ॥४०॥
भानुवर्त्मनि वसन्तयात्रया देशकालनिगमो मयाकृतः ।
नाऽत्रकिञ्चन कपोलकल्पितम् तोषमेतु बुधवर्गक स्ततः ॥ ४१ ॥
तुष्यतात् स कुसुमाकररूपः स्वागतेन वचसैव कृतेन ।
प्रीत एव हि भवेज्जगदात्मा भानुरेष सविता जगतोऽपि ॥ ४२ ॥

इतिश्रीभगवद्विभूतिवर्णने सूर्यचरिते महाकाव्ये
वसन्तयात्रावर्णने जलदुर्गप्रवेशो
नाम तृतीयः सर्गः ।

---

१ कर्मणिषष्ठी । २ सौम्यगोले ।
३ मासानां मार्गशीर्षोऽह मृतूनां कुसुमाकरः । इति गीता.

# चतुर्थ सर्गः ।

ऋतुकुटुम्बः ।

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ।

वसन्तो नृप स्तस्य राज्ञीशरत्सा
स्वकान्तेन सूर्यं यतः सा प्रसूते ॥
प्रियावल्लभा वाभिमुख्यस्य भाजौ
वपुः शीलशोभाविशेषैः समानौ ॥ १ ॥
वसन्तः पुमानङ्कुरोद्भेदकर्ता
शरत्त्वङ्गना सर्वसम्पत्सवित्री ॥
प्रमाणे त्विमावेव तुल्यौ न चान्यौ
गुणैः सर्वलोकातिगौ दम्पती भोः ! ॥ २ ॥
इमौ दम्पती चित्ररूपौ धरण्याम्-
न शीतं सहेते न चोष्णं प्रभूतम् ॥
गुणै विश्ववन्द्यै जगद् रञ्जयन्तौ
स्ववर्गैः समेतौ विचित्रं प्रयातः ॥ ३ ॥
इमौ गोलभेदेन रूपं स्वकीयम्
मिथो वल्लभत्वान्मिथस्त्वर्पयन्तौ ॥
उदग्याम्यदेशेषु चित्रं भ्रमन्तौ
सदा तिष्ठतो गोलमध्ये तु युग्मम् ॥ ४ ॥
यदा तूत्तरे वल्लभो याति मीने
तदा वल्लभा दक्षिणे याति तस्मिन्[१] ॥
यदा चोत्तरे कामिनी कन्यकायाम्
तदा कामुको याम्यभागेऽभियाति ॥ ५ ॥

---

१ मीने

नृपस्याऽग्रतः शैशिरो याति नित्यम्-
विना नीरवर्षं जगच्छीतयन् सः ॥
महिष्या पुरः प्रावृडेषा प्रयाति-
इमौ दम्पती राजभक्तौ नितान्तम् ॥ ६ ॥
वसन्तशरदोः सुत स्तपऋतु स्तयोः पृष्ठतः
सदा चरति गोलयो र्विपरिवर्त्तमानो ध्रुवम् ।
तपेन पितरौ जयञ् छिशिरमेव निर्मूलयन्
न चातिसुखदो नृणां न खलु सर्वपृथ्वीगतः ॥ ७ ॥
प्रावृट् शिशिरतनुजो, हेमन्तो हिमसमूह हार्दकरः ।
पित्रो र्गुणपरिपाकाद् राज्याः शरदः प्रियोऽनुचरः ॥ ८ ॥
वसन्तोऽत्र[१]मीनद्वये वर्त्तते भोः
कुमारीद्वये तस्य कान्ता शरत्सा ।
कुमारीद्वये याम्यगोले वसन्तः
शरन्मीनमेषद्वये चित्रमेतत् ॥ ९ ॥
यदा कर्कपार्श्वे व्रजेत्प्रावृडेषा
तदा नक्रपार्श्वे व्रजेद्वल्लभोऽस्याः ।
यदा नक्ररेखास्थिता प्रावृडेषा
तदा शैशिरः कर्करेखासु रूढः ॥ १० ॥
इदं सम्मुखीनन्त्विऋतुद्वन्द्वयुग्मम्
गुणै स्तुल्यरूपं मिथो मित्ररूपम् ॥
निदाघो हिमश्चेति वैरेण पूर्णौ
मिथः शोषणे क्लेदने यत्नभाजौ ॥ ११ ॥
निदाघस्य वर्षा विरोधाय यत्ता
तदीयं तनूजं हिमं सोऽपि हन्ति ।

---

१ सौम्यगोले ।

हिम स्तद्विरोधाय पूर्णो हिमाद्रौ
न यत्र प्रभुस्यान्निदाघः कदापि ॥ १२ ॥

निदाघः समुद्रस्य सामीप्यदेशे
वसन् हैमनं वासमात्रं हिनस्ति ।
वहिः कर्कनक्रा द्विचित्रं चरित्रम्
ऋतूनामतो नैव साम्यं कदाचित् ॥ १३ ॥

भुजङ्ग[1]प्रयातं गजेन्द्रप्रयातम्
वसन्तप्रयातं न शक्यं निबोद्धुम् ।
तथापीह वर्षे यथाऽस्य प्रयातम्
तथा वर्ण्यते प्रीतये कोविदानाम् ॥ १४ ॥

अयं भारतं नित्य मेवाधितिष्ठन्
विशेषाद्रवौ मीनगे जृम्भतेऽत्र ।
रसालाङ्कुरोद्भेदनं पौषमासाद्
इषं व्याप्य विद्वन्दरीदृश्यतेऽत्र ॥ १५ ॥

दरीलीनताम्वा[2] प्रकाशं प्रकाशम्
विचित्रेषु वृत्तेषु भिन्नं स्वरूपम् ।
दधच्चैकमेवाऽथ भिन्नं शरीरम्
ऋतूनां न जानामि चित्रं चरित्रम् ॥ १६ ॥

ऋतुद्वन्द्व मेतत्त्वदीयं विरुद्धम् ।
कवीनां वचोभि स्तपे,[3]त्यादिभिर्भोः ?
कवित्वेन वैरं गुणो दूषणं वा ?
विरोधोऽप्ययं भूषणं गोलसिद्धः ॥ १७ ॥

---

१ सर्पगमनम् । २ वा, =इवार्थः ।
३ तपेन वर्षा शरदाहिमागम इत्यादिना ।

कथं वर्णितं तादृशं प्राकृतनैस्तत् ?
तयोः पार्श्ववर्त्तित्वमात्रेण विद्वन् !
तथावर्ण्यशक्त्युद्भवायेति विद्धि !
मदीयं पुनर्वर्णनं गोलयुक्तम् ॥ १८ ॥

न चेत्प्रत्ययस्तेऽत्र शास्त्रं पठत्वम्
विना ज्यौतिषं दृष्टिहीनो मनुष्यः ।
विना व्याकृतिं वक्तुमेव प्रभु र्नो
विना दर्शनै र्नो विचाराऽसमर्थः ॥ १९ ॥

रसालाङ्कुर श्चेद्वसन्तस्य चिह्नम्
तदा सर्वदेशेषु कस्माद्वसन्तः
न सर्वत्र माकन्दभू र्भूमिरेषा
न वा यौगपद्याद्रसालाङ्कुराः स्युः ॥ २० ॥

मधो र्लक्षणं तेऽस्ति गोधूमपाकः-
कुतः पाक एषां न यत्राऽस्ति जन्म ।
जनि र्यत्र तत्राऽपि भिन्नो विपाकः
दिविष्ठे यवाद्या स्तु वर्षे पचन्ते ॥ २१ ॥

अथो लक्षणं पुष्पजन्म ब्रवीषि·
न कस्मिन्नृतौ पुष्पनिष्पत्तिरत्र ।
विशेषा त्प्रसूनोद्भव स्तेमतश्चेत्
भवत्सम्मतः को वसन्ते विशेषः ॥ २२ ॥

मधोः पाटलासूनसूति र्हि चिह्नम्
न, सर्वेषु मासेषु सूति र्हि तस्य ।

---

१ वङ्गादौ । २ वर्षर्त्तौ । ३ यसर्गे सिद्दगे इत्यादौ तथा ८ सर्गे ८ श्लोके द्र० ।

विभिन्नेषु जातेषु चेन्नैकजातौ-
भवेद्व्यक्तिभेदेन चेन्नैकगुच्छे ॥ २३ ॥

भवेद्देशभेदेन चेन्नैकदेशे-
उपायैः सुधूपादिभि श्चेत् स्वभावात् ।
असत्यं ब्रवीषीति चेत् सत्यवादिन् !
निरीक्षस्व, नेपालकूर्माचैलादौ ॥ २४ ॥

अहो पल्लवोद्भेद एतस्य लक्ष्म
सदा पल्लवत्वं सुभूम्युद्भवस्य ।
विशेषोद्भवे मेऽभिसन्धिर्नु सत्यम्
विशेषोद्भवः किन्न मेघाऽवलोके ॥ २५ ॥

किमेतस्य चिह्नं वद त्वं शृणु त्वम् ?
वसन्तः सदा सवर्गः सूक्ष्मरूपः ।
तदीया प्रिया तस्य रूपान्तरं सा
तयोरात्मजस्तत्स्वरूपः सुतत्वात् ॥ २६ ॥

तयोः सेवकौ दम्पती तत्स्वरूपौ
यतो भृत्यवर्गः स्वकीयोऽनुबिम्बः ।
अतो लक्षणान्यस्य कर्त्तुं न शक्यम्
विभुर्नित्य एषो हि पुष्पाकरश्च ॥ २७ ॥

कथं भेदषट्कं प्रसिद्धन्तु तेषाम्
यथा कारके कर्त्तृतादेः प्रसिद्धिः ।
विभिन्नं पुनर्लक्षणं तत्र दृष्टम्
विचित्रं चरित्रं त्वमत्राऽपि विद्धि ॥ २८ ॥

---

१ भूरुहपक्षे बहुव्रीहेः, त्व प्रत्ययः । अन्यत्र सदा इत्यसमस्तः ।

कथं वेद्मि विद्वन् ! वनागाम बुद्ध्या
कवीनां वचोभिर्गुरूणां प्रसादात् ।
प्रमादस्य हानात्सदाशास्त्रदृष्ट्या-
विजानीहि तत्पूरुषं दिष्टरूपम् ॥ २९ ॥

इति श्रीभगवद्विभूतिवर्णने श्रीसूर्यचरिते महाकाव्ये
ऋतुकुटुम्बवर्णनन्नाम चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः ।

अथ निदाघः ।

१ श्रीगणेशायनमः । श्रीगुरुभ्योनमः ।

शिरीषकुसुमप्रियः शिशिरमूलनिर्मूलको-
निदाघनिकरैर्मही प्रतिदिनं समाशोषयन् ।
क्वचित्कुटजभूरुहा न्कुसुमिता न्वितन्वन्नहो-
क्वचिच्च नवमल्लिका विरमयँस्तपोऽप्यागतः ॥ १ ॥

---

१ अत्रायं निष्कर्षः एक एव वसन्त ऋतुः, विषुववृत्ते तस्यैव सदा वर्तमानत्वात् । तस्मिन्नेव, पञ्चमसर्गस्य द्वाविंशश्लोकोक्तन्यायेन, दशाभेददर्शनात्षड्ऋतुकल्पनम् । तच्च मधुश्चमाधवश्च वासन्तिकावृतू, इतिवेदोक्तमेव । अतएव वसन्तस्य व्यापकत्वम् सर्वकालसत्वात् । अतएवाऽस्मिन ग्रन्थे, इहाद्यमधुमाधवाविति निदाघे, 'गोधूमपाकनिरतैव दिविष्टभूमिः, इति प्रावृषि, मन्येहं स हि भगवान् वसन्तरूपइति शरदि, सूक्ष्मं सर्वगतं वसन्तनरपंहेमन्तलीनंवदन् इति हेमन्ते, मधुरयंकिलसर्वगोविभुः,-इति शिशिरे, इतिवसन्तस्य-तत्तदनुस्यूतत्वं प्रदर्शितम् ।

२ शीतम् । ३ बिरिमल्लिका कुरैया, इति प्रसिद्धा ।

रवौ रसमुतारकां-ग्रहणापीडितः सर्वतो
रसं पिबति पोषितुं स्वतनुमेव भोक्तुञ्च ताः ।
अहो जगत एषच वै जननपालनादौ विभुः-
स्वयन्तपति कस्तत स्तपभयात्समाश्रीयताम् ॥ २ ॥

इतीव जनचेतसां बहुविधान्विकल्पान्मुहुः-
मुरारिरिव मेचको तरुवरै रसाद्रैः कृतः ।
प्रफुल्लबहुपुष्पकै र्बहुविधैर्द्रुमै राजितो-
वसन्तशरणो गिरिर्हिमयुतः समाश्रास्यति ॥ ३ ॥

हिमेन परितः सितो नयनचित्तसम्मोहको-
सुरेन्द्रनगराथितो भगवत स्तु सौधायितः ।
अगम्यविषयो नृणां, विविधपादपोद्वृतो-
नरेन्द्रनरसवितो गिरिरिहाद्य संरक्षकः ॥ ४ ॥

जना इह महीरसो रसमितैर्न लभ्यः करैः-
रसाङ्गुलिभिरार्द्रता मिलति तत्र शुष्कस्थले ।
इहाद्य हरितो[2]ऽपि नो मिलति तत्र गोधूमकाः-
विभान्ति बहुधाऽप्यहो हरितपीतसँछिन्नकाः ॥ ५ ॥

इहाऽद्य मधुमाधवौ स्मृतिपथं कदा चिद्गतौ-
पर नयनगोचरौ भवत एव तत्राऽधुना ।
क्वचि च सहि फाल्गुनः[3] सखिपथस्य संदर्शको-
यवादिषु निःसृतां हरितमञ्जरीं पश्यति ॥ ६ ॥

क्वचि द्विविविधभङ्गिभिः कटकशोभिनीभिर्युता-
मही हरितपत्रकै रुचिरनालकै रालुभिः[4] ।

१ कृतिका । २ दूर्वा । ३ मासः । अर्जुनश्च । ४ प्रासद्भैः
६ शाकैः ।

क्वचि द्वहुमहीरुहै र्गगनसर्पिभिः शोभिता-
प्रशस्तजलमृत्तिका सुनिभृताऽथधान्यैः समा[१] ॥ ७ ॥

निदाघविकला अहो नरवरा उशीराञ्जिताम्-
वृतिं दधति वारिणा तिमितिकां स्ववातायने ।
हिमालयगता जना रुचिरकम्बलाद्यैः कृतम्-
निचोल मथ विभ्रते शिशिरवातभीताङ्गके ॥ ८ ॥

रसालफलचूषणादिह जना निदाघार्दिता-
निगाढपिटिकाभृतो लपनपाकरोगान्विताः ।
रसालत[२]रुचूषणाद्धिमगिरौ जना नीरुजः
प्रदीप्तजठराग्निका वलयुताः सुखं शेरते ॥ ९ ॥

रसालफलपाकतो भवति चाऽत्र[३] पीता मही-
हिमे हरितवर्णिका तनुफलै रवीजै रहो ।
इहाऽस्तिगगने रजः प्रखरदाहयुक्तो मरुत्-
तत[४] स्तु विमल न्नभः शिशिरके मरुद्वारिणी ॥ १० ॥

सुषीमजलवाञ्छया ध्रियत अत्र भृङ्गारकैः[६]
कवोष्णकरणोद्यमः शिशिरनीरभीते स्ततः
जना हिमगिरेः कथा मतिगिरं कथं वर्णये
निदाघभयगोपने जगति नास्ति तादृक् परः ॥ ११ ॥

दिवाकरगतिं जनाः श्रयति रोहिणी सन्निधिम्
ततस्तु निखरातपादिह करीष[७]तुल्या मही ।
समुद्रतटनीवृतः प्रवलवृष्टिक्लिन्ना महीम्
समे दधति शाद्वलां नवजलाश्च सुह्मादयः ॥ १२ ॥

---

१ महीविशेषणम् सर्वाऽविषमा च । २ इक्षुः । ३ मानवे,आर्यावर्त्ते । ४ तत्र, हिमालये । ५ शांतम् । ६ कनकालुका । ७ शुष्कगोपथः ।

शिलाप्रचुरभूतले गिरिमये तटे वारिधेः ।
वलाहकविनिःसृतं जल मधः समाप्लावयत्-
अलब्धशरणं श्वसत् प्रखरतिग्मरश्मेः करैः-
करालितवपुः सितं श्वसिति भूमि मास्र न्न्वहो ॥ १३ ॥

इद ञ्जल मनिर्दशं पिबति नैव कश्चि न्नरः-
परं भवति रोपणे बहुगुणं सुशीलैः कृषौ ।
निदाघसमये ऽप्यहो भवति तत्र संरोपणम्
इहाद्य वसुधा सुधा[1]सदृशतापदात्री जले ॥ १४ ॥

गवामिह न लभ्यते तपऋ[2]तौ विशुष्कं तृणम्-
ततो हरितमेचका यवसपूलिका भूरिशः ।
इहाद्य विफलामही तपनतापदुर्गायतः-
स[3]दाफलमहीरुहैः फलवतीव तत्रा ऽस्ति भोः ॥ १५ ॥

समुद्रतटनीवृ[4]तो मलयमारुतेना ऽऽवृताः
सदा सुखमया जनाः ? नहि निदाघ एतादृशः ।
न वा शिशिरकाङ्क्षयं भवति तत्र हेमन्तकात्-
कवोष्णलहरीः स्पृश ञ्जलनिधेर्मरुद्याति यत् ॥ १६ ॥

हिमालयतपालयौ हिमगिरिश्च विन्ध्यो मतौ
तयोः समतले रवि स्तपति यादृशो मध्यतः
तथा क्वच न दृश्यते भुवि करै रसाञ् शोषयन्-
नहो झटिति वर्षणात्स भगवा न्समाधास्यति ॥ १७ ॥

कथं झटितिवर्षणं तवमतं समे भूतले,-
ह्यनूषर मनश्मकं विकृति मेति भूमे स्तलम् ।

---

१ चूर्णम्=चूना इति लोके । २ समासेप्ययं प्रकृतिभावः । ३ नालिकेरैः । ४ देशाः ।

इहाद्य सकलन्तपं तपति यद्ययंभास्करस्-
तदैव धरणिः क्षमा भवति सर्वशस्योद्भवे ॥ १८ ॥
हिमालयजलालयौ शिशिरवातसंभेरकौ-
तयोस्तटधरा पुनर्विषमिता ऽद्रिपृष्ठस्थिता ।
अथोषरविराजितोपलकुलाकुला भूरिशः
इतीह सततंरवि निजकरै र्जलं यच्छति ॥ १९ ॥
इतस्तु समभूतले रविकरैः सुवाष्पायिते
चतुर्भिरपि मासकैर्भवति शस्यजातिः सपा ।
यदीह सतन्तं रवि हिमजलालयप्रान्तवत्
प्रवर्षतु तदा मही दलदलाकुता दुस्तरा ॥ २० ॥
न वीजवपनोचिता न च तृणाङ्कुरोद्भेदिका
न चाऽपि फलपोषिका न तरुदार्ढ्यकृत्यां क्षमा ॥
अतो ह्युचितकार्ययं जगतएव आत्मा रविः-
यथा तथकृते जगत् परितप न्स्वयं पाति च ॥ २१ ॥
सुरम्भण-तपः-प्रवर्षण-फलाप्ति-हान्यादिभिः-
वसन्ततपनादिकाञ् जगति षड्ऋतून् प्रेरयन् ।
भवन्ति किल षड्दशा जगत एव सत्तादिकाः
जनस्य सतन्तं रवि ज्ञपयतीति बोधप्रियः ॥ २२ ॥
वसन्तकलिकां तपःप्रसरपोषपक्वामवन्-
प्रवर्षणविवर्द्धितां फलवतीं विधातुं हरिः ।
हरित्प्रिय इव स्वयं प्रतपना द्धरिद्वर्णकाम्-
करोति मृगशीर्षग स्तुहिनयन्नवाग्गोलकम् ॥ २३ ॥

---

१ अनुकरण मिदम् । २ सुरम्भणम्, तपनम्, प्रवर्षणम्, फल-प्रसवः, अपचय; हानिः, । ३ इतिसुरभिप्रभृतीनाम्, ऋतूनां कर्माणि ।
४ जायते अस्तीत्यादि । जन्मादिका, इति च पाठः ।
५ तपः प्रसरोधर्म प्रसरः ।

यदा भवति वासरंमहिमशालि सौम्ये जनाः ?
तदा तनुतरं दिनं भवति याम्य गोलार्द्धके
तथैव ऋतुपर्ययः क्रमत एव ज्ञेयः समः
परन्त्विह यथार्चवं भवति तादृशं नो क्वचित् ॥ २४ ॥
रविर्दशशतैः करै र्दशदिशः परन्तापयन्
दशाऽपि हरतीन्द्रियप्रबलभावनाःसाम्प्रतम्
दशाऽघजनिताऽसुखन्तदिति भावयन्तो जनाः ?
दशप्रगुणापुण्यदां दशहरां भजद्धंचिरात् ॥ २५ ॥
चिरस्य जलसंभृतां प्रखरभानुभि र्निजलाम्-
इलामयमहाव्रतः सपदि मानवाः ? कारयन्।
परस्य पुरुषस्य तां प्रियतरां भवा त्तारिणीम्-
निबोधयति सेवितुं तपमहाभया न्निर्जलाम् ॥ २६ ॥
विधुः किल तपःप्रथां जगति जाग्रतीं ह्रासयन्
जनान् त्तणयितुं त्तणं त्तितिजमूर्ध्नि ज्येष्ठायुते।
युनक्ति निजवाहनं स तु शशन् विलङ्घ्यैव खम्
त्तणं परधरे गतः क्षणवतीं वितन्वन्क्षपाम् ॥ २७ ॥
यथा मृदुलरश्मिभि स्तपऋतौ मनो मोदयन्-
नुदेति कुमुदप्रियः प्रियतमो नृणां तद्भवेत्।
निशां यदि विशालतां प्रणिनयन्निशाकर्त्तृताम्
निजां पर मवञ्जग त्तपमहाभया त्त्रायताम् ॥ २८ ॥
ज्येष्ठानुरागपरिपूरितबिम्बकान्तौ-
कान्ताननोपमिति मञ्चति यामिनीशे।
यास्य न्स्वयं पुन रहो तरणिः स्मरं स्ताम्-
ज्येष्ठां स्वतर्ज्जनकरीं जलधौ निमग्नः ॥ २९ ॥

---

१ हेमन्ते, राधापाद पराहत इत्यादौ।

जैवातृक स्तत उदारकरैः स्वकीयैः ।
सञ्जीवय न्भुवनमेव निदाघतप्तम्-
भानौ नृयुग्मदयिते जलधौ निमग्ने ।
[1]हे व्यविशंगत इव ब्रुडति प्रतीपम् ॥ ३० ॥

सर्वेजना जलनिधिं प्रणमन्त एव-
माल्यार्घपुष्पपणगोरसनालिकेरैः ।
संतापभासुरसुवर्णविकाशिभानुम्-
भानुं नृयुग्मपरिलम्बितसर्वबिम्बम् ॥ ३१ ॥

कल्लोलशेखर-गतं द्रुतजातरूप्य-
दीप्तिं, विचित्रकिरणा न्मुहु रर्पयन्तम् ।
दृष्ट्वैव तद्भगवतः पुरुषोत्तमस्य-
धिष्ण्यं. प्रसाद मगम[2] न्पुरुषोत्तमस्य[3] ॥ ३२ ॥ युग्मम्

क्षितितलनिलयै र्महीरुहात्मा-
जलनिधितीरगतै स्तरङ्गरुपः ।
उदयगिरिरसौ विचित्रवेषो-
[4]धरगतपुम्भि रदर्शि शैलशीलः ॥ ३३ ॥

इति श्री० भ० वि० व० श्रीसूर्य चरिते महाकाव्ये
निदाघवर्णनन्नाम पञ्चमः सर्गः ।

---

१ हा इति शोके । २ अलभन्त । ३ जगन्नाथस्य । ४ धरः पर्वतः ।

# षष्ठः सर्गः ।

*निदाघेशुचिः ।*

अथ जना भगवत्परिपालिते-
अधिवसन्त उभे पुटभेदने ।
रविविधू उदितास्तमनं गतौ-
जलनिधे स्तनयाविति मेनिरे ॥ १ ॥

जनकदायहरः सुतरां सुतो-
जलधिरिक्थ मिमौ हरतो यदि ।
जगत एव तदाऽऽतपवारणाच्-
छरणदौ भवतो जगतां परौ ॥ २ ॥

इति जगत्पतिमन्दिरयो र्गताः-
जलनिधे स्तटयोः परपूर्वयोः ।
भरतभूमिजुषो मनुजा हितम्-
जगत एव समीहितु मानताः ॥ ३ ॥ युग्मम्

अथ शशी जलधेः प्रिय आत्मजो-
भुवनसेचनसम्मितवारिभिः ।
भृततनु र्नवमेघ इव स्वयम्-
सुनिभृतं रविणेव सहोदितः ॥ ४ ॥

दिनकरः सुदिनाय सदोद्यतः
सदयमेव तदा कुदिनञ्चरन् ।
निजकरै रमृतद्रवसम्मितम्-
घनतनौ निदधाति वनं ततः ॥ ५ ॥

---

१ समूहालम्बनात्मक भ्रमानुवादः । २ एकवचनेन पूर्वोक्त भ्रम निरासः । ३ अमावास्यासूचिता । ४ जलम् । ५ चन्द्रबिम्बात् ।

कियदहो जलमेष तनौ स्वके-
विधु रयं विनिगूहयतीह नः ।
मतिरिमं विषयन्नविगाहते
परिमिनोति परं रविचेष्टितात् ॥ ६ ॥
रविरयं हरमाण इतोजलम्-
क्रमश एव करान् विनिवेशितुम् ।
*यसति तेन शशी क्रमशोऽर्चिषा-
निजतनुं भस्माण इवेक्ष्यते ॥ ७ ॥
रविविधू जगदार्द्रकृतीङ्गितात्-
जलनिधिं विशतस्तु सहार्द्रया ।
जलधरेण तदिङ्गितबोधने-
जलमुचाऽधिनिशं किल भूयते ॥ ८ ॥
भुवनतृप्तिकरं भुवनन्विदम्-
भवनभानकरं गृहमेधिनाम् ।
मम च पिङ्गलनागनिवासतो-
हिमगिरेर्विषयाद्गिरिशस्मृतेः[२] ॥ ९ ॥
गिरि रयं गिरिशस्य परं प्रियो-
विविधशृङ्गमही-झरिणी-झरैः ।
भुवनभोगसहै रथगह्वरैः
परिगतो भुवनान्तरभास्वरः ॥ १० ॥
ऋतुरयं कृगतः परितापकः-
क सवितुः मखराः किरणा अमी ।

१ परित अनुमिनोति ।
२ विश्वनाथस्य भानकर मित्यन्वयः ।
३ गुहाभिः, पातालभुवनेश्वरादिभिः ।
* यसोऽनुपसर्गादितिश्यन् विकल्पः ।

क्वच धरा परितापधराऽधुना-
धरवरे मनसीति विचारयन् ॥ ११ ॥

क्षितितलात्क्वच दिङ्मितनल्वके-
क्वचन तद्द्विगुणे त्रिगुणे क्वचित् ।
क्वचन हीनतरेऽल्पककेऽप्यतः
पथि चलन्न तपं क्वच नाऽगमम् ॥ १२ ॥ युग्मम्

हिमगिरौ सकलाऽऽर्द्रतमा मही-
तृणचयैः सुभृता हरिताऽङ्कुरैः ।
प्रथमतोऽप्यधुना परिपिञ्जरा-
कलमरोपणशोभितभक्तिका ॥ १३ ॥

क्वचन धान्यभृता घनमेचका-
क्वचन कोद्रव-वाप-विराजिता ।
क्वचन मुद्गकुलत्थकमाषकैः-
वसुमतीति यथार्थकतां गता ॥ १४ ॥

हिमगिरिं मनसेति विवर्णयन्-
नवतरङ्किल चित्रशिलान्ततः ।
शकटवेगवशात् सकलां महीम्-
तपयुतामनसेव दृशाऽस्पृशम् ॥ १५ ॥

अयि पुनर्वसुमान किल भास्करस्-
तपति भूमितलं स यथापुरा ।
इह कृषिं रभतेऽघकृषीवलः-
सभगवान् परिपुष्यतु वर्षणात् ॥ १६ ॥

---

१ अस्या वर्णनं पञ्चदशसर्गे द्रष्टव्यम् । काठगोदाम इति स्थानाद् क्रोशमिते रानीबाग इति प्रसिद्धे । २ अनश्वा महाशकटेन ।

अथ जना जगदीशविलोकनाद्-
द्रुतविलम्बितकेन पुनर्गृहान् ।
स्मृतिगतानुपगन्तु मतित्वराम्-
उपगताः किल दिक्षु चतुर्ष्वपि ॥ १७ ॥

एवं तपर्त्तुविभवेन हिमालयाद्या-
न्यन्यर्त्तुदुस्तरगतौ प्रतिहायनेषु ।
साक्षात्कृते भगवतो मनुजाः कृतार्था-
स्तन्वन्ति सूर्यगति मुत्तरतो गतार्थाम् ॥ १८ ॥

पूर्वत्र दारुमयमूर्त्ति रसौ परेशो-
ग्रीष्मर्त्तुजन्यतपदुःखविशुद्धदेहः ।
आस्थाय स्यन्दनवरं नृपचक्रयुक्तम्-
भक्ताञ् चिराय किल दर्शयते स्वरूपम् ॥ १९ ॥

अथ तपनसुतप्तं लोकमेतं समन्तात्-
मनुजनिकरदुःखं स्यन्दनस्थःस दृष्ट्वा ।
घनपटपटलं द्राग् वेष्टयन् व्योमरूपः—
घनवनपरिवृद्ध्यै योगनिद्रामवाप्तः ॥ २० ॥

सपदि पवननुन्ना-वारिवाहाः कुतोपि-
वनभृत-घन-देहा व्योम्न्यदृश्यन्त नीलाः ।
रविमपि तिरयन्तो ध्वान मुच्चैः सृजन्तः—
तप-विजयमृदङ्गं वादयन्तीह नूनम् ॥ २१ ॥

आदित्यस्त्वदिते स्तृतीयचरणो भक्त्या नतः साम्प्रतम्
शुभ्रांशुः शुचितां शुचेर्विशदयन्नाषायन स्वंगृहम् ।

---

१ भूलोकम् । दुःखान्तमस्यैवविशेषणम् । २ हरिशयनीसूचिता
३ सृज विसर्गे तुदादिः परस्मैपदी ।

आषाढीं विदधाति बीजवपनव्यापार-संसूचिकाम्
सर्वाषाढधरां गुरूनुपनमन्त्युप्त्यै गिरां भक्तितः ॥ २२ ॥

इति श्रीभगवद्विभूतिवर्णने सूर्यचरिते महाकाव्ये निदाघे भगव
द्यात्रावर्णन्नाम शुचिसर्गः षष्ठः ।

---

# अथ दक्षिणायनम् ।

## सप्तमः सर्गः

प्रवर्षणम्

भगवति वसुनाथे ब्रह्मपुत्राद्रिसंगाद्
उदयति पुन रस्तं सिन्धुसंगे प्रयातुम् ।
शिखरविहितमार्गो भाति पूर्वापरस्थः-
भरतनृपतिभूमे भूषणं विन्ध्यशैलः ॥ १ ॥

रवि रपि किल पारं सागरस्याऽऽप्तुकामः
सरसि नदयुगाब्द्ध्योः संगमे स्नाति नित्यम्
इति मनुजनुषोऽपि स्वीयसामीप्यदेशे ।
क्वचिदपि खलु तीर्थे स्नान्ति, विश्राणयन्ति ॥ २ ॥

भवजलधितरि र्वा कर्कसक्रान्ति रेषा-
उदगयनगतस्यान्तस्थिता गोलरेखा ।
इति मनुजवरै र्यत्स्नानदानादि कार्यम्
उदगयनमुखेऽस्मिन् दक्षिणाशांमुखेन ॥ ३ ॥

---

१ बृहत्संहितायां द्रष्टव्यम् । २ ब्रह्मचारिणः । ३ पूर्वनिपात विधि रनित्यः । ४ आभ्यां वचनाभ्यां ग्रहणातिरिक्त काले रात्रिस्नाननिषेधेन ज्ञाप्यते त्रिंशत्कर्कटे केपूर्वा इति ।

संक्रान्तिक्षणतः स एष भगवान्याम्याभिवक्त्रः स्वयम्
सव्यैः सिन्धुजलन्तु दक्षिणतरैर्हस्तै र्वबं मानसम् ।
स्वीकुर्वन् घनमण्डलं तिमितयंस्तच्चाऽपि निष्पीडयन्-
नार्द्रादृक्षवरः पुनर्वसुयुतो नाप्नोति खेदं क्षणम् ॥ ४ ॥

गर्जन्त्यः पवनेरिता घनघटाः सम्यग्भृता वारिणा-
साक्षादञ्जनसन्निभाश्चपलया संभासुरा भूरिशः ।
वर्षन्त्यो भुवनं स्वमातृसदृशं धिन्वन्ति पुष्यन्त्यहो-
पुष्यस्थे जगतोऽपि पोषणपरे पूषाभिधेये परे ॥ ५ ॥

वर्षाधीशः परो ऽयं विधिहुतविषयं स्वैः करैर्गूहमान-
स्तेजस्त्वैक्येन वह्नेः पुनरखिलमय स्तैजसापूर्वरूपम् ।
तन्वन्यंश्च पुनस्तां भुवनहितकरी माप्यसृष्टिं सिमस्मै
याथातथ्येन भागं वितरति जगता मात्मभूतः परेशः ॥६॥

आसारौघप्रपूर्णा स्थलजलजनिभि र्जन्तुभि र्जातजीवा
जीवानां तापशान्त्या जनितनिजयथार्थत्वरूपा हि धात्री ।
धारापातै र्हसन्तीधरजनित–नदीशोभनानेकहारा
सोच्छ्वासा श्वेतनीरा जगदखिलमियं लालयन्ती कृतार्था ॥ ७ ॥

मही माहेयीनां महितयवसोत्पादनपरा
समा श्यामा वामा कलुषतमनीरैकनिलया ।
नभः श्यामं मेघै र्मिहिरमहिमच्छादनपरैः
तमालाभं सर्वं जगदिदमिदानीं घनरुचा ॥८॥

वलाहकघटां नभस्तलगतां निरीक्ष्याधुना-
प्रियं मुदितमानसं तितनिषु र्नरीनृत्यति ।

---

१ सर्वस्मै ।

मयूररमणी स्वरं प्रियतरं मुहु स्तन्वती
तनोति नगरायितां भुवमरण्य-संवेष्टिताम् ॥९॥

अरण्यधरणि[1] र्यथा धरवरे दरीदृश्यते
मनोहरतमाऽसमा विरलपादपै राजिता
तथा घनमहीरुहै रमितकण्टकै र्वेष्टिता
न भाति समभूतले जलदकालक्लिन्ना जनाः ? ॥१०॥

जना नगरवासिनो न विदुरेवमन्यार्त्तवम्
निकेतनमये पुरे विदुरि ? वार्षिकं यादृशम् ।
इदञ्चघनकर्दमे पथि नितान्तसंपिच्छिले
यथा स्खलनभीतितो न तु तथा गुणौ र्वार्षिकैः ॥११॥

कथ न्न विदु रे ! जना नगरवासिनः कृत्रिमे
वनेऽखिलमहीरुहेऽखिललताभृते पुष्पिते ।
सदैव सकलार्त्तवं सुनिपुणा दरीदर्शकाः
पुना रुचिरविभ्रमं जगत एव चर्कारकाः ॥१२॥

गङ्गासागरसङ्गात् पूर्वस्यां ब्रह्मपुत्रसङ्गोऽब्धेः ।
[2]कर्कटरेखा तस्माद् विन्ध्यगता सिन्धुसङ्क्रान्ता ॥१३॥

आरम्भोऽस्या वृष्टेः सप्ताश्वे मृगशीर्षगे तस्मात्
क्रमतः प्रागुत्तरती वेला हिमगिरिमार्गतः पश्चात् ॥१४॥

गच्छन्तीयं सर्वां भूमिं शस्योद्भवाय योजयति ।
मरुभूमिमेव मेका मयोग्यतायाः परित्यजति ॥१५॥

धन्येयं मरुभूमि र्विकृतिं या प्रावृषाऽपि नो याति ।
क्षालितमृत्स्नाऽपङ्का दर्दुरहीना नर्दर्दुरै[3] र्दृष्टा ॥१६॥

---

१ हिमालये । २ अयं श्लोकः प्रथम श्लोकस्य टीकाभूतः । ३ मेघैः ।

मरुभूमेः पश्चिमतः पञ्चनदं सर्वशस्यसंपन्नम् ।
कुर्वाणेयं वर्षा भारतवर्षं कृतार्थयति ॥१७॥
पञ्चनदे पर्जन्यो वर्षति नितरां समुद्रदूरस्थे
सिन्धौ सिन्धुसमीपे नो वर्षति कापि दैवगतिः ॥
एवं वेलामार्गा त्सुह्मोत्कल-वङ्ग-तैलङ्गान्[1] ।
कर्णाटक-पाण्ड्यादीन् मद्रविदर्भान् महाराष्ट्रान् ॥१८॥
मालव-गुर्जर-कच्छानानर्त्तान् सिन्धुसौवीरान्
आप्लाव्य पारसीकान् कम्बोजान् याति कश्मीरान् ॥१९॥
पश्चिमपवर्तपृष्ठे कौङ्कणदेशः समुद्रतीरस्थः ।
उत्तरतः केरलत स्तस्यपुरस्तात्कृशा वृष्टिः ॥२०॥
वृष्टिरियं रविकिरणैः पवनेन विघट्टितै श्चित्रा ।
चित्रनिवेशै भूमे र्मेघानां चित्रतायोगात् ॥ २१ ॥
भारतवर्षे तपन स्तपति यथा वर्षतीति नो चित्रम् ।
चित्रमिदं हिमबहुले तूत्तरभागे[2] कृशावृष्टिः ॥ २२ ॥
अथवा रविसंक्रान्तेरारब्धा ब्रह्मसङ्गमे सैषा ।
वर्षामानसभावा मानसं[3]-भूतिं विजानाति ॥ २३ ॥
हिमगिरि दक्षिणपार्श्वे नेपालादौ विचित्ररूपेयम् ।
जनयति नूत्नं नीरं भूमेरुदरादुदश्चिता तुल्यम् ॥२४॥
गिरिधरणिरनेकैरश्मभिर्जातरोका,
तपनकिरणतापात्तृ[4]ष्यतीयन्ततोऽद्य ।
प्रपिबति घननीरं नीरसं तन्वती तत्
वमति धवलभूतं वाष्पपाकेन नूनम् ॥ २५ ॥

---

१ अपशब्दोयं कलिङ्गस्य । कालिङ्गान्–इति पाठःसाधुः ।
२ दिविष्ठादौ । ३ शीत संपत्तिम् । भाद्रे ८ म० श्लोकादौ द्रष्टव्यम् ।
४ लडन्तम् ।

जलमिदमतिमात्रं निर्मलं शस्यवृद्ध्यै-
भवति मनुजपेयं श्वेतभावस्य शान्तेः ।
हिमगिरिमतिशौक्ल्यं प्रापयन्नीरपूरम्-
र्वनति नदनदीनां चूषितानां तपेन ॥ २६ ॥
उपकृतमतिमात्रं मेदिनी, तापदानात्
जलहरण-समर्था यत्कृता ग्रीष्मकेण ।
सवितुरयमथान्तेवासिभावं प्रपन्नो-
जगति किमिव कर्तुं शक्नुयान्नो महात्मा ॥ २७ ॥
अवनिरथ पिपासाऽऽव्याकुलेवाम्रतोयम्-
जलधरपरिमुक्तं शोषयन्ती स्वकीये ॥
वपुषि तदनुपीना जन्मिनामुद्भिदाञ्च-
खनिरिव किल जाता भूरिपानीय-पानात् ॥२८॥
दिनमणिकरतप्ता मेघसिक्ता नितान्तम्-
र्खिलधरणि रनेकैः शाखिभिः शोभमाना ।
मृदुतृणपरिपूर्णा क्लिन्नगात्रा सवाष्पा
जनयति सुखराशिं पश्यतां सत्कवीनाम् ॥२९॥
विविधकृषिपरीता कर्षकैः सेव्यमाना-
निविडतरविबन्धै र्वेष्टिता नीरपूर्णा ।
तनुकलमकृतार्घा पिञ्जरा श्यामलाऽथो-
रसिकनयनबन्धं सेवते क्षेत्रराजिः ॥३०॥
इतिकलमगुणाढ्यां पोषयन् पुष्ययातो-
रुचिरकणिशगर्भै र्धान्यजातैरिलां सः

---

१ निर्मांति, नीरपूरमित्यनेनान्वयः । २ ग्रीष्मकस्यमहावैद्यत्वं सूचितम् । ३ पुनः भूरिपानीयपानेन तदेव मेदिनीत्वमापतितमिति तदुपचारः सूच्यते । ४ अप्रतिहता । वांझी इतिप्रसिद्धा । प्रथमसंभोगखिन्ना नायिका व्यज्यते । ५ सामान्यवनितावल्लिर्व्यज्यते ।

नयनहरणरूपां कारयन् कर्मसाक्षी
समयमपिजनवृन्दं नन्दयन् श्लिष्यतीव ॥३१॥
अथ मुदितमनस्काः पीवरा नीर-लाभात्
कुहरनिलयलीना भूतले वायुपानाः ।
उरग-इति-गदन्तः स्वीयनामाऽतिमात्रम्
स्वभगतमसमारादादृतंकर्तुमुत्काः ॥३२॥
निखिलभुवनभानुं भानुमेनं समेषाम्-
सुखकलननिमग्नं ग्लानिहीनं प्रसन्नाः ।
पवनभजनपीनाः पूजयन्तीह नूनम्-
त्विति जननिकारोऽपि [2]ध्यायते पूजया तान् ॥३३॥
सममपि भुवनं द्राक् श्लेषयन् सूतियोग्यम्
कणिशनिचयगर्भं शस्यजातं वितन्वन् ।
धरणिमखिलवीजोद्भेदपूरेण पिप्रद् ,
धरणिसुरमनांस्युत्कानि वेदे करोति ॥३४॥
अवनिसुरमनास्युत्कानि तावन्न पाठे-
यजनहवनतृप्तस्त्वो[3]षधीर्यावदेषः ॥
जनयति रवि रात्मा नो सिमस्यैव वृष्टेः,
यजनहवनलभ्रानीति विश्वस्यशान्त्यै ॥३५॥
उपाकृतिविधौ विधुर्द्विजगणां सुखन्नोदितुम-
श्रुतीक्रनविभावनः श्रुतिगतः प्रतन्वन्ननुम् ॥
उदेति हि पुरः त्तपां क्षपयितु न्नु तां भद्रिकाम्-
परेद्यवि यथा हि सा भवति भद्रदा श्रावणी ॥ ३६ ॥
अथो द्विजगणाः समे क्वचन तीर्थतीरे गताः

१ क्रिया विशेषणम् । २ वर्द्धयते । ३ ओषधि-प्रादुर्भावस्यैवोपाकर्म प्रयोजकत्वात् ।

त्रिकालतनुपावनं हरितगोमयं स्वाङ्गके ।
विलिप्य सकलाघकप्रशमनेन शुद्धाः श्रुते-
रुपाकृतिविधिं यथाविधि वितेनुरुत्काः शमे ॥ ३७ ॥
कलानिधिरयं मृगे ग्रहपतिश्च कर्के गतौ-
विचित्रतरवाहनौ निजगतिं मिमातेऽधुना ॥
इतीव धरणेः सुराः परिधिसूचनायाऽमुना
विवेष्ट्य मणिबन्धकान् शमिति तन्वते तन्तुना ॥
द्विजोत्तमगणो जगत्कुशलकारिभावान्वितो ॥३८॥
रिरक्षिषुरशेषतोऽखिलजनान्स्वकीयानिव
गृहीतशुभसूत्रक श्चरति मेदिनीमात्रके
अहो श्रवणगोचरा भवतु सर्वदा श्रावणी ॥३९॥

इति श्रीभ० वि० च० सू० म० काव्ये प्रवर्षणन्नाम-
सप्तमः सर्गः ॥

## अष्टमः सर्गः

वर्षासु भाद्रः ।

अथ मघामधिगम्य विभावयन्
भुवन मेष पुरः सवितोदितः ।
रुचिरबिम्बफलारुणबिम्बको
द्रुतसुवर्णनिभान् किरणान् किरन् ॥ १ ॥
किरणजालमिदं विततं हिमे-[4]
स्फुरदतीव मनोहरतान्दधत्-

१ अनेन विशेषणेन, अग्रमग्रं चरन्तीनामोषधीनां रसं वने इत्यस्यार्थः सूचितः २ कस्याञ्चित् पौर्णमास्यां स्वस्यातीव रुग्णत्वात्पारोदयम् । ३ श्रवणनक्षत्रवती । श्रुतिविषया च । ४ हिमालये ।

जलनिधौ वचसोऽपि न गोचरम्-
नियतिपङ्क्तिविधिं तनुते स्फुटम् ॥ २ ॥
नियत मेव कराः सवितुः स्वयम्-
किमपि गूढतमं दधते पयः ।
मुदिरमण्डलकं, मुदिरा यतो
मुचिरता[1] मुपयान्ति भुवस्तले ॥ ३ ॥
कादम्बिनी गगनमण्डल मावृणोति
सौदामनी स्फुरति तत्र निशासवर्णा[2] ॥
मुञ्चन्त्यथो धरणिधेयगुणा ञ्जलौघान्-
मेघा हिरुक्स्वन महो महिता जनौघैः ॥ ४ ॥
ओघा अपां शिखरिपातविशीर्णरूपाः
कर्पूरपुञ्जविमला धवलन्धरायाः ।
मासद्वयं निविड-वर्षणधौत-मूर्त्याः
शष्पैर्निरुद्धवपुषो जलधिं लुठन्ति ॥ ५ ॥
शस्यानि संप्रति जगन्ति. महान्ति कर्तुम्
गर्भन्दधन्ति, विपुलत्व मितानि भान्ति ।
मा,कीशलोचनपथं भगवन् ! गमन् यत्
कीनाशतान्दधति शस्यजनाय कीशाः ॥ ६ ॥
कीशा अमी विविधमूलफलान्यरण्ये
चूषन्ति शाखिषु तथा नवपल्लवानि ।
नद्यादितीरचिगता स्तनुशैवलानि
शाखामृगत्वमिति ते खलु पालयन्तु ॥ ७ ॥
सिंहे रवौ रवितनूजसमानवर्णा[3]

---

१ मुचिरताम्, दातृभावम्, जलमोचनशलितामित्यर्थः ।
२ निशा=दरिद्रा, पीताविद्युद्वृष्टिकारिणी । ३ श्यामाः इत्यर्थः ।

सर्वंसहा, वसुमतीति यथार्थनामा ।
सर्वापि धान्यकणिशैः सुतरां प्रपूर्णा
गोधूमपाक-निरतैव द्विविष्ठभूमिः ॥ ८ ॥
भूम्यो द्विविष्ठविषयस्य समुद्रतीराद्
उच्छ्रायतान् दधति त्रिंशतिनल्वतुल्याम्[1] ।
कैलासमानस-विराजितमध्यभागाः
प्रालेयशैलवलयाः शिवदुर्गरूपाः ॥ ९ ॥
हेमन्त एव सततं शिशिरेण साक-
मास्तेऽत्र पूषणि गते खलु याम्यगोले ।
सौम्ये वसन्त इह राजति सूक्ष्मवृष्ट्या
धान्यानि घर्मजलसूनि कथं भवेयुः ॥ १० ॥
पूर्वासु भास्वति गते परिपाकपिङ्गा
प्राच्या धरा धनवतीव हि धान्यवर्गैः ।
श्यामैव गर्भभृतमञ्जरिका विभाति
श्यामावतार सदनं धरणि हि[2] दीच्या ॥ ११ ॥
रात्रिन्दिवं किल चरन्सविता स्वकीय-
गेहं गतः, स्थगयतीव घनेन देहम् ।
श्यामत्वमेव जगतः कलयन् करोति-
पूजोपदेशनविधिं किल कृष्णधाम्नः ॥ १२ ॥
श्यामा[3]लरङ्गतरले धरणीतलेऽस्मिन-
श्यामाम्बरे प्रथममेव पुराऽवतीर्णो ।
श्यामे समस्तभुवने तमसा तमोघ्नः
श्या[4]मः स सूति मगमत्सुनिपीतवासाः ॥ १३ ॥

---

१ नल्वःकिष्कुचतुः शतम् । २ हि श्यामावतारसदनमिति-श्यामत्वे हेतुः । ३ यमुना । ४ कृष्णः ।

पीताऽथ धान्यकणिशैर्धरणिः समस्ता
पाकोन्मुखा भवति सर्वफलाय यत्ता ।
लोका वसन्ति धरणेः किल कल्पवल्लीम्
सौभाग्यसन्तति-वितानपरम्पराढ्याम् ॥ १४ ॥
दूर्वां, सदातननतनुं क्षितिवर्मभूताम्-
कुम्भोद्भवोदयत एव पुरः प्ररूढाम् ।
सर्वाघशोषनकरी ममृतप्रसूताम्-
भूत्यै समर्चितु महो प्रतिवर्षमेव ॥ १५ ॥ युग्मम् ॥
सर्वं तृणं रविकरैः परिशोष मेति
दूर्वैव विश्वपशुपालनबद्धचित्ता ।
ग्रीष्मेऽपि जीवति जनावनकल्पवल्ली-
हीत्यर्चयन्ति वनिता किल तां नभस्ये ॥ १६ ॥
कुम्भोद्भवोऽथ कलुषं जगतः समस्तम्-
निर्णाशयन् व्रजति दृष्टिपथं जनानाम् ।
दूर्वाक्षतादिभि रथो नरपास्तदर्घ्य-
दानेन, चाऽऽत्मकलुषं क्षपयन्ति नूनम् ॥ १७ ॥
सूरोपि धान्यपचनाय वसन् सदाऽयम्
अर्यम्णि भे तपति तीव्रकरः सवर्षम् ।
वृष्टिं दिवैवं न निशासु स लोकचक्षुः-
पश्यन् सगर्भकलमान् सदयङ्करोति ॥ १८ ॥
शुभ्रांशु रेष मतुसम्मितभन्तदानीम्
सूर्याद्गतो निजतनुं सकलं प्रदीप्तम् ।

---

१ दिवैवेत्यादिना रात्रिवृष्टे रतिवृष्टेश्च सगर्भकलमाहितकारित्वं सूचितम् । अतएव लोकचक्षुः सदयमितिपदस्वारस्यं सहृदयै रास्वादनीयम् ।

कुर्वन्ननन्तकिरणैर्विशदैरनन्तम्-
अर्चन् गतः शतभिषक्कृपयेव पूर्वाम् ॥ १९ ॥
सम्पूरयन् कलमबीजनिधानपात्रान्
सम्पारयन्प्रथमधान्यकणान् सुधांशुः ।
सायं वियद्धवलयन्भुवनं सिसिक्षुः
सौधाकरीं किरति कामपि कौमुदीं सः ॥ २० ॥
इति सुधाकरतीव्रकराविमौ
भुवनपालन सम्मितसम्पदाम् ।
प्रजनिकां गृहिणी मुपकुर्वतीम्-
स्वचरितै र्नुदतः परिचारिकाम् ॥ २१ ॥
अथ विधो रुपरिस्थगणाः समे-
ह्युषसि सोमपहव्यभुगादयः ।
अभिलषन्ति जगन्त्यपि पालितुम्
सहगतिं महितां रविकन्ययोः ॥ २२ ॥
सहगती रविकन्यकयो रियम्
सुखयितुं सकलं भुविजायताम् ।
रविरसौ भगवान्प्रतपन् पुनर्
निजगृहादभिगच्छति कन्यकाम् ॥ २३ ॥

इति सूर्यचरिते वर्षर्त्तौ भरणन्नामाष्टमः सर्गः ।



# नवमः सर्गः ।

शरद्वर्णनम् ।

कन्यायां सवितरि सम्मुखीवृत्तौ-
भूलोकेऽधिकतरतोऽजनाभवर्षे ।
राजन्ती नृपगृहिणी शरत् स्वगेहम्-
शोभाढ्यं बहुविधसम्पदा करोति ॥ १ ॥

शालीनां परिणतमञ्जरीभरेण
शालीना-इव कुरुते हि भूमिभक्तीः ।
मेघानां घनवनै[2]र्वर्षणात्सितानाम्
मालाभिः स्फटिक विभूषणान्दिगन्तान् ॥ २ ॥

आरामान् बहुकुसुम-प्रतानपूर्णान्-
चित्राभिः फलततिभिर्वितीर्णहारान् ।
वापीनां विमलजलैर्मरा[3]लवद्भिः
संसिक्तानिव परितस्तनोति सेयम् ॥ ३ ॥ युग्मम् ॥

नद्यो याः कलुषजलाः कुसङ्गतः प्राग्-
आमूलाद्ध्वसदनान्तमार्गभागान् ।
कन्यायाः करमिलनाय मित्र[4]चारे
ब्रह्मर्षौ[5] भगवति दृश्यमानमूर्त्तौ ॥ ४ ॥
ओच्छ्वासा[6]द्विमलवना मरालरम्याः
क्लिन्नत्वाद् घनपुलिना: प्रफुल्लपद्माः ।

---

१ अस्मिन्नेव सर्गे श्लोके ४४ तमेद्रष्टव्यम् । २ जलम् । ३ हंसाः । ४ सूर्यः । ५ अगस्त्ये । दृश्यते स किलहस्तगतेऽर्के इति वराहोक्तेः । ६ आपरीवाहात् ।

संफुल्लैस्तटजनिभिस्तु काशसङ्घैः
सेवन्ते मृदुकृति चामरश्रियन्ताः ॥ ५ ॥ युग्मम् ॥

भूमिं ये घनशकला निरीक्षितुं द्राग्
डीयन्ते सपदि समागता वनेन ।
संशुष्कां धरणिमिमां मुहू रसालाम्[1]
शीकन्ते यजनमहोत्सवैः सुतृप्ताः ॥ ६ ॥

धंश्यानां प्रथमत एव पूजनेन
संप्रीताः पुनरपि देवता यजन्ते[2] ।
कन्यायां शरदि नरास्तु लोकबन्धौ
बन्धुत्वं निजकृतिभिर्निदर्शयन्ते ॥ ७ ॥

पर्जन्यः स हि भगवान्निकामवर्षी
वर्षर्त्तौ जनयति चौषधीः[3] समग्राः ।
सामग्र्यात्परिपचनेन शारदीन्ताम्-
सामग्रीं जनहितकारिणीं करोति ॥ ८ ॥

नारीयं शरदथवा नरो न जाने-
संसूते सकलफलं वसन्तवापम् ।
वापं वा खलु तनुते वसन्तलक्ष्म्यै
चित्रायां तरणिगमे शरद्विचित्रा ॥ ९ ॥

एकत्र स्फुरति जगद्यवादिवापाद्-
अन्यत्र स्फुरति ततोऽपि धान्यलूनैः
अधेदं नृपगृहिणीवशंवदं द्राग्-
अन्यग्रं परिकुरुते कृतिं विचित्राम् ॥ १० ॥

---

१ रसालामिमाधरणिं संशुष्कां सतीम् मुहुः शीकन्ते सिञ्चन्ति ।
२ यजन्तः, इति वा पाठः । ३ च पुनरिदानीं, सामग्र्यात् साकल्येन, तासां, परिपचनेन, इत्यन्वयः ।

मृद्वीकाप्रभृतिफलानि शैलराजे-
सूक्ष्मैलाप्रभृति तु सागरस्य तीरे ।
तन्वाना जगदखिलं शरत्प्रहृष्टम्
हृष्टात्मा स्वयमपि भाति हर्षिणीनाम् ॥ ११ ॥
कर्कन्धूप्रभृति-फलानि शैशिराय-
दित्सन्ती कुसुमजनिं तनोति तेषु ।
मन्येऽहं शिशिरऋतुर्न चोष्णसोढा
यत्वस्याः[१] शिशिरतराणि याचतेऽसौ ॥ १२ ॥
एतस्यां जननिचयाः प्रसन्नचित्ताः
पूज्यानां यजनमहैः कृतावदानाः ।
वेषाढ्याः स्वयमपि मण्डयन्ति वाहान्-
यन्नूनं विविधकृतिज्ञता[३] फलाय ॥ १३ ॥
राजानो विजयदशां निदर्शयन्तः
शस्त्राणां घनतरघर्षणेन धाराः ।
सन्तीव्राः कठिनतमाः शिलास्वकुण्ठाः
कर्मारैर्[४]अतिपटु योजयन्ति वारा[५] ॥ १४ ॥
वङ्गीया विविधजपादिभक्तिनिष्ठाः
वंहिष्ठां बहुतरपूजयोपतुष्टाम् ।
दुर्गाया बहुविध-वाद्य-गीत-घोषम् ।
मूर्तिन्तां जनकुतुकं विसर्ज्जयन्ति ॥ १५ ॥
आर्याणां जयदशमी जयाय नूनम्
यत्त्वस्यां जननिवहः प्रसन्नचेताः

१ कर्मत्वाऽविवक्षया षष्ठ्येव । एनामिति वा पाठः । २ शरदि, वक्ष्यमाणायां दशम्यामवा । ३ कृतिज्ञता कार्यनिपुणता । ४ लोहकारैः । ५ वारा पानीयेन, पानी इति प्रसिद्धिः ।

शान्तात्मा भयरहितः सपः समोऽपि-
सम्मेलं भजति वहिः प्रकाममत्र ॥ १६ ॥

इति सौम्य गोलः ।

चित्रार्द्धे भगवति पूष्णि संप्रयाते
मृगाङ्के नवतरकन्यकोपभोगात् ।
राज्ञीयं द्युमणिवलं ग्रहीतुकामा-
दण्डे तं किल निदधाति पूर्वपश्चात् ॥ १७ ॥
आरूढः स हि भगवांस्तुलान्तदैव
[2]दाक्षिण्यात् स्वयमुचितं ग्रहीतरश्मिः ।
गोलार्द्धे समतुलया तनोति साम्यम् ।
दम्पत्यो रुचिरतरं शरत्सुरभ्योः ॥ १८ ॥
तेनेयन्नृपरमणी वसन्तरागान्
झीप्सन्ती तनुतरपाटलासु भावान् ।
तन्वाना मृदुकलिकोत्करांश्च तासु-
वासन्तीं श्रियमपि जेतुमिच्छतीव ॥ १९ ॥
मन्येऽहं स हि भगवान् वसन्तरूपः
गूढोऽस्यां जगति ततो विभूतिमूर्त्तिः ।
नैवश्चेत् कथमियमेकदैव सम्पत्-
सम्पूर्णा, जगदखिलं करोति चित्रां ॥ २० ॥
एतस्मिन् समयवरे स चौषधीशः
साकल्यं परिकलयन् स्वमण्डलस्य ।

---

१ अद्येत्यनेन सूचित एतस्य काव्यस्य निर्माण-समयः । ग्रन्थस्तु सम्वत् १६८२ आश्विन सुदि प्रतिपदि आरब्धः ।

२ चातुर्यात्=दक्षिणगोल-गामित्वाच्च ।

३ श्लिष्टः । ४ शरद् विशेषणम् ।

अश्विन्यां परिगत एव तत्कुमारा-
वोषध्यो रसवहुला-इतीव वक्ति ॥ २१ ॥
सर्वे ते वरभिषजः सुसूचनेन
तस्यैवं स्वसदनतो गता उदीच्याम्
गृह्णन्ति प्रखररुजः समूलघातम् ।
हन्तॄन् तान्, विधुकिरणैः समृद्धजायून् ॥ २२ ॥
लोकानां जगति सुखं सऽदायमिच्छुः-
शुभ्रांशुः शरदि विचित्र-रश्मिजालः ।
तीक्ष्णांशुं स्वतं-इति सूचनाय जाग्रत्-
+कौमुद्यां जननिकरं प्रमादयेत ॥ २३ ॥
तीक्ष्णांशुः स च किरणैः सुधांशुपूरैः-
संसेकं जलधिजलेषु वर्षणेन ।
मुक्तादीनखिलनिधीन् धरातलेऽस्मिन्
तन्वानः सपदि समागतः समीरे ॥ २४ ॥
चारोऽयं रविशरदोः सुरम्यरूपः-
कं रम्यं रमयति नो वसुन्धरायाम् ।
भू रम्या गगनतलन्त्वतीव रम्यम्-
रन्तु यज्जडमतिकोऽपि सम्मतीच्छेत् ॥ २५ ॥
भारोयं फलभरनामितानानानाम्-
मारो वा ऋतुरमणीप्रतानिनीनाम् ।
निश्चेतुं नहि सुधियाऽपि शक्य एषः-
शङ्केऽहं खलु शरदो विचित्रपाकः ॥ २६ ॥

१ अश्विन्यां स्थितत्वाद्विचित्रेत्यस्य चित्रा विरुद्धोऽप्यर्थः २ वाक्ये संहिताया अविवक्षया सन्ध्यभावः । स्वत सुष्ठु-अत स्वात्यां गच्छे त्यर्थः + श्लिष्टः । ३क्रियाविशेषणम् । ४समीरे स्वात्याम् । ५नमनहेतुः ।

पाकोऽयं न हि शरदः सहस्ररश्मे-
रुस्राणां धरणितलेन कोऽपि बन्धः[1] ।
येनेयं बहुविधभौतिकैर्विकारैः-
संभिन्ना भवति विचित्रसन्निवेशा ॥ २७ ॥
भूस्थानाञ्जननिकराः प्रयान्तिभूमिम्
शीतार्त्ताः सपशुपरिच्छदाः सुतूर्णम् ।
चित्रं यच्छरदिह भाति सर्वतः सा
तत्र द्राग् हिम ऋतुरेव पश्चिमार्द्धः ॥ २८ ॥
ऊर्ज्जेऽस्मिन्प्रथमत एव मानवानाम्
मानार्हा ऋषिपितृदेवताः प्रसन्नाः ।
शस्येष्टया पुनरपि तर्पिता निवासान्
वीक्षन्ते गगनतलस्पृशान् सदीपान्[2] ॥ २९ ॥
दीपानां ततिनिकरैर्नितान्तगौरै-
[3]र्दीप्स्योर्ज्जे धरणितलं रवीन्दुबिम्बम् ।
बिम्बाभं किल विदधत् कुहूश्च राका-
राकेशौ घटयति शोभया हसन्तीम् ॥ ३० ॥
गङ्गायां तरणिगता जनास्तु सायम्-
गच्छन्तीं जवमहतीं तरिं स्वकीयाम् ।
दीप्त्याऽऽस्रामुभयत एव लोकयन्तो-
बिम्बं तत्कुत इति भान्ति मार्गवन्तः ॥ ३१ ॥
मार्गेषु प्रथिततरेष्वथोऽप्रसिद्धे-
ष्वामूलात्सकलगृहं सचन्द्रशालम् ।

१ सम्बन्धः गन्ध इति वा पाठः, गन्धोगन्धक आमोदे लेशे सम्बन्धः गर्वयोरिति विश्वः ।
२ आकाशदीपवर्णनम् । ३ दीपावली प्रारभ्यते ।

रश्मीनाममितकसंख्यया परीतम्
बिम्बं तत्परिमिनुते सहस्ररश्मेः ॥ ३२ ॥
पद्मेयं शरदि समस्तवस्तुसंस्था
पद्मानामलमनया कथा-प्रसक्त्या ।
इत्येवं धरणिकृषो न केवलन्ताम्
विश्वेऽपि स्वजनयुता यजन्ति भक्त्या ॥ ३३
दित्सन्तस्तृणनिचयन्त्वरं पुराऽयम्
धेनुभ्यो रविकिरणैर्गृहीतसारः ।
बोभोति प्रतिपदि मानवा गवेन्द्रम्-
साहार्य्यं[2] विविधमहं महन्ति नूनम् ॥ ३४ ॥
लोकानां कुतुकभरस्तु कार्त्तिकेऽस्मिन्-
किं वर्ण्यः प्रतिदिनमेव माधवस्य ।
लीलायां स्नपनजपादिभक्तिमार्गे
संलग्नैर्नरनिकरै र्भृता[3] हि मार्गाः ॥ ३५ ॥
मार्गा ये शिशिरवधू[4]-विकारिताः प्राक्
संक्लिन्ना घनतरवर्षणेन भिन्नाः ।
वर्षोत्थै स्तृणनिचयैरलक्ष्य-लक्ष्याः
लक्ष्यन्ते शरदि विशीर्ण-सर्वदोषाः ॥ ३६ ॥
दोषाणां प्रबलचयस्य हिंसनेन
मार्गाणां शमन-विशोधनादिधर्मैः ।
जायूनां परिपचनेन संग्रहेण-
साधर्म्यं दधति शरद्भिषग्वराः किम् ॥ ३७ ॥

---

१ भूमिस्पृशः, वैश्या इत्यर्थः ।
२ सगोवर्धनपर्वतम् । ३ भृताः पूर्णाः ।
४ ऋतुकुम्बे ११ श्लोकेद्रष्टव्यम् ।

निर्दोषे जगति कृते शरद्गुणौघैः
खद्योते भगवति चाऽऽगते द्विदेवे[1] ।
राधाया धव इति बोधयन्निवाऽहम्-
संसुप्तस्त्वहिशयनोऽपि जागृतः किम् ॥ ३८ ॥

कः का किं विधिविहितं करोति तस्मिन्-
संपूज्येऽखिलजगतोऽपि पालके नो ।
संसुप्ते[2] तपसमयादपां प्रवृत्त्यै-
सम्बुद्धे भगवति सर्वतः शिवाय ॥ ३९ ॥

राधायाश्चरण-युगोपभोगखिन्ने
मन्दाभे भगवति पूषमण्डलस्थे ।
उद्विग्ना ऋतुरमणी सुधांशुपार्श्वे-
सर्वन्तत्किल गदितुं स्थितेति मन्ये[3] ॥ ४० ॥

[4]भूगोलः किलपरिमण्डलः सवार्द्धिः
नो भूमिस्त्वियमिह भिन्नभिन्नखण्डा ।
इत्येवं परिकलयन्विधुः सचित्रः
संध्यायामुदयगिरिं समाधिरूढः ॥ ४१ ॥

पूर्णोऽयं शशधरमण्डलः समन्तात्-
रायाकामुदयगिरेः किरीटकोटौ ।
तिष्ठन्वा जगदखिलं करैर्हिमाभम्
कुर्वाणो विशदयति स्वकीयमप्त्वम् ॥ ४२ ॥

शरदि विचित्रा भूमिर्गगनतलं सचित्रमेवाऽत्र ।
पशवः सम्मदभाजः प्रमदाः समदा नराः प्रमदाः ॥

१ राधानक्षत्रे । २ शुचौ द्रष्टव्यम् । ३ विशाखातृतीयचरणा-त्मकदिनत्रयावशिष्टा शरदित्यर्थः । ४ अनेन चन्द्रबिम्बाकारं भूगोलं विलिख्य तत्र कलङ्काकारा पृथिवी चित्रयितव्येति सूचितम् ।

इत्येवं नृपरमणी, मण्डयमाना निजं गेहम् ।
अर्यमचरणात्रितयाद्राधाचरणात्रयं यावत् ॥ ४४ ॥
भगवति राधानाथे अध्वमये चलति दक्षिणाभिमुखे[1]
अनुचरपार्श्वे त्यक्त्वा सर्वं याताऽथ लंकायाम् ॥ ४५ ॥युग्मम् ।

इति विविधविलासै र्लालयन्ती जगत्सा
रूचिरफलविपाकैर्योजयन्ती स्थिरञ्च ।
दृढतरतनुदोषान् शोधयन्ती पुराणान
तरणिसरणिसारा[2] नूतनं तत्तनोति ॥ ४६ ॥
[3]पापानां किल शमनाय धर्मराजः-
सम्पूज्यो बहुविधसम्पदा सुभोजः ।
भ्रातृणां, यमयमुनाप्रचारितं प्राग्-
विश्वस्मिन्नपि शरदस्तमालपत्रम् ॥ ४७ ॥

इति श्रीभारद्वाजगोत्र-पन्तवंशावतंस दुर्गादत्त पन्त सूरेः
सूनोस्तारादत्तपन्तस्य कृतौ भगवद्विभूतिवर्णने
सूर्यचरिते महाकाव्ये शरद्वर्णने सम्पत्प्र-
सवोनाम नवमः सर्गः ।



---

१ याम्यगोलाभिमुखे । २ तरणिसरणिसारा इत्यनेन निर्गमप्रवेशाभ्यां सौम्य-याम्यगोलयोःशरद्वसन्तप्रादुर्भावःसूचितः, सच ऋतुकुटम्बे, वसन्तप्रादुर्भावे चास्मिन्नेव ग्रन्थे स्पष्टः ।

३ सिंहावलोकनन्यायेन, यात्रासमये तिलककरणस्य, लोकाचारस्यसूचनार्थं यमद्वितीयापश्चाद्वर्णिता ।

# दशमः सर्गः ।

*हेमन्त वर्णनम्*

राधां-साक्षितया वसन्तगृहिणी-त्यक्त्वां विभूतिं पराम्
हेमन्तः समवाप्य कीटनिलयं भानुं पुरो लोकयन् ॥
लोकानां शरदं सुभोगनिपुणां सम्पच्चयं रक्षितुम् ।
मन्दोष्णै दिवसै स्तुषाररहितै स्तान्प्रेरयन्भासते ॥ १ ॥
यत्र क्वापि यवादिवापनिरता आवापसक्ताःक्वचित्-
धान्यादेः सतन्तन्नरा न विरता आकार्त्तिकात्कार्यतः ।
सूर्याश्वैर्विरते द्विदेवंचरणे घस्रेऽपि खर्वात्मके-
लोका रात्रिचराः कृतौ प्रकुरुते शार्दूलविक्रीडितम् ॥ २ ॥
हेमन्तो मधुसन्निभोऽमलगुणैः कृष्णांशरूपः पुरः
नो द्वन्द्वं सहते न वर्षति परं वापेन संपूरयन् ।
भूमिं भूमिशयान्विलेशयतरान्कर्तुं ससन्देशयन्-
प्रालेयाद्रितटान्महीमवतरन्कष्टं समुज्जृम्भते ॥ ३ ॥
हेमन्ते प्रथमे दले क्षितिरियं सिक्ता क्वचित्कुल्यया ।
वापाप्ता क्वचिदप्यहो सहरिता क्वाप्यङ्कुरैः कर्बुरा ।
कृष्टा क्वापि विलूनशस्यनिचया च्छन्नाक्वचिच्चाऽर्जुनैः-
सूर्ये वृश्चिकपीडिते नटयति स्वीयां विभिन्ना दशाः ॥ ४ ॥
कुन्दागस्त्य-सहस्त्रपत्रदलकैः कुत्राऽपि संशोभिता-
पद्माकैस्तु विशीर्णप्रत्नदलकैः प्रोद्भिन्नपुष्पैर्हिमे ।

---

१ विशाखा-चतुर्थचरणस्य वृश्चिकराशिगतत्वेन तत्साक्षित्वम् । २ हायनमभिव्याप्य, अत्यन्तसंयोगे द्वितीया । ३ विशाखा । ४ स्वीया-इत्यनेनधरणि–तरणि–सम्बन्धोऽलौकिकः सूचितः ।

भिन्ना भाति धरा धराधरनृपप्रान्तेषु भिन्नेह भोः ?
राधापश्चिमपादघातविकले ब्रध्नेऽनुराधानुगे ॥ ५ ॥
मल्लोयंकुसुमाकरस्य गृहिणीरक्षार्थ मभ्युद्यतस्-
तत्सूतं सकलं पदार्थनिचयं संरक्षितुं वाप्यहो ।
मासानामथवा विलक्षणतरः सारः ससम्पच्चयः
मन्ये मार्गवपुः स एष भगवान् राधाऽनुराधानुगः ॥ ६ ॥
इक्षूणां परिपीडनाय मनुजाः सञ्चेष्टमानाः क्वचित्-
धान्यानां क्रयविक्रयाय वणिजः संवेष्टमाना नरान् ।
नद्यादौ धनपुञ्जबन्धुसहिताः सांयात्रिकाः सर्वतः
लक्ष्यन्ते विविधागमेषु निरता लोका हिमे सत्वराः ॥७॥
कोदण्डा विविधा इमे जगति यद्धेमन्तमल्लस्य हा !
भज्यन्ते नितराङ् कुचक्रनिचयैर्यत्पूरुषैर्निर्दयम् ।
तद्धेमन्तभटेन शीकरचयैः संसावितः को प्यहो-
तौषारः प्रहितः प्रयोग इति ते संसेवितो[1] भास्करम् ॥ ८ ॥
राधापादपराहतस्तदनुजा संल्लञ्चितः सर्वथा-
निःशङ्कं पुनरप्यहो स भगवाञ् ज्येष्ठाऽनुरक्तस्तया
निस्तेजाः परिभूत एव नितरां विश्वैर्दिनैस्तर्ज्जितः[2]-
कष्टं मार्गनिविष्ट एव स तथा ! मूलं श्रितः किञ्चरेत् ॥९॥
भानुं मार्गयमाण एष भगवान् राजा द्विजानां क्वचित्
पूर्णाङ्गः समुदेति पूर्वशिखरिप्रस्थे मृगं लोकयन् ॥
मार्गाद्भ्रष्ट इवाऽथ भास्वति गते प्रत्यग्धरे मार्गिकः-
मार्गीमेव तनोति किन्नु तनुतां रूढो मृगाङ्कः स्वयम् ॥१०॥

---

१ आदिकर्मणिक्तः सेवितुमारब्धा इत्यर्थः ।

२ सूर्यभोगस्य एकस्मिन्नक्षत्रे १३ । २० दिनपलानां सत्वादत्र स्थूलतयाविश्वैरित्येवोक्तम् ।

कीटार्थं धनुषि स्थितो दिनमणिर्नक्राद्विभीतस्ततः-
सङ्कोच्यैव स्वकीयरश्मिनिकरं सौम्याद्धतो दक्षिणे ।
गोले, वह्निमयं शरौघमकिरन्नक्रालयं शोषितुम्-
हेमन्तेऽपि तपं प्रचण्डकिरणः सूते विरुद्धन्विदम् ॥ ११ ॥
पौषो रात्रिसमं दिनं शुचिसमं तापन्तु नक्रालये-
शीतं लक्षगुणं दिनं लघुतमं कर्कालये कारयन् ॥
रात्रिञ्चोत्तरमेरुसन्निहितके तद्वैपरीत्ये दिनम्
पूष्णा भूरिकृति विचित्रफलकां सम्पोषयन्सार्थकः ॥१२॥
धान्यानां लवनं तथा च वपनं वङ्गोत्कलादौ क्वचिद्-
आम्राणां कुसुमोद्गमञ्च जलधिप्रान्तेषु संभावयन्
गोधूमादिकृषिं क्वचिद्धिमगिरिप्रान्तेषु संपारयन्-
पद्माकै विकसद्भिरङ्कितततनुः श्वेताम्बरः कोऽप्ययम् ॥१३॥
शिग्रूणां कुसुमोद्भवेन रचयन् श्वेताम्बरत्वं स्वकम्
मौनं मौनसुमोद्गमेन गमयन्पद्माककैः पावयन्-
अन्यैर्गौरसुमै ललाटपटलं सम्यक्समं भूषयन् ॥
प्रालेयाद्रिगृहो विभूतिधवलः शम्भुः स एवाऽयमाः ? ॥१४॥
दम्पत्यो रुचिरां प्रयोगनिपुणां निम्लानि लीलाकृतिम्
कर्त्तुं शिक्षयमाण एष रजनीमायामयन् राजते
नास्मिनग्लानिरवाप्यते निधुवने कामाग्निसंसेविते
निर्दोषे सलिलेऽनिले नविकृते दीप्ते पिचण्डानले ॥१५॥
ग्राम्या निर्मलमारुतानलजलस्वादैकबद्धादराः
नित्यं नूत्नपयोघृतान्नविभुजः पृथ्वीशया नीरुजः ।

---

१ मुनेरगस्त्यस्येदंमौनम्ः सुमम् कुसुमम् प्रसूनं कुसुमं सुमम्, इति पाठाभिप्रायेणाऽयं प्रयोगः सर्वत्रास्मिन्काव्ये ।

२ जाठराग्नौ ।

पालालं[1] विमलं नितान्तसुलभं लब्ध्वा परं विष्टरम्
सौधोत्सङ्गनिषण्णशीतविकलान् हा तन्वते नागरान् ॥१६॥
श्वानो भैरवसेवकाः समजगद्रक्षैकचित्ताः सदा-
भूतानां गुणवेदनैककुशलाः शीतातपाक्तां महीम् ॥
उत्खायाऽथ निजाकृतिं मृदुतमं गर्तं विधायाऽधुना-
सौम्ये शीतनिवारणं विदधते याम्ये[2] तु धर्माऽवनम् ॥१७॥
भास्वान्भूमितलं करैः परिमृशन्नासन्नलक्ष्यस्तपम्
दूरस्थस्तुहिनन्तनोति नितरामित्येव चन्द्रश्चिरम् ।
आसन्नः सवितुर्नलक्ष्यसुतनुस्तापेन लीनः क्वचित्-
प्रोद्यन्साकमनेन वा विनिमये पश्चान्ततो बोधयेत्+ ॥१८॥
सूर्येन्द्वोः सहवास एष हि तटे सिन्धो रसाले सुमम्-
प्रोद्भाव्याऽथ निजैकरागरसिकानास्वादयन् तत्समम् ।
सूक्ष्मं सर्वगतं वसन्तनरपं हेमन्तलीनं वदन्-
भूसंस्थान-जलाऽनिलादि-सहित-प्राज्योस्त्रभूतिं वदेत्+॥१९॥
पूर्वामाप्तवतो दिवाकरवरस्याऽद्योसूकाणाश्रयः-
प्रस्थानप्रविभक्तरीतिनिपुणः संशोभते सोत्तरः ॥
क्रामन्नूर्द्ध्वमुखः क्रमेण दिवसं संवर्द्धयन्-लोकयोः-*
चैतन्यं प्रचिनोति शीतरजनी-नीहारनिर्हारकः ॥२०॥
विद्याभ्यासरता विचारपरमा आध्यान[3]मठ[4]ठादिकान्-
व्यापारान्सहजान्सलालस महो निर्वाधं[5] मातन्वते ॥

---

१ धान्यतृणमयम् । हा तन्वते शोचन्ति ।
२ निदाघहेमन्तयोः सौम्य याम्ययोर्वैपरीत्येन वृत्तिः ।
+ उभयत्रशक्यर्थेलिङ् । * रोदस्योः ।
३ आध्यानमुत्कण्ठा पूर्वकं स्मारणम् । ४ मठः कण्ठो करणम् ।
५ निर्वाधमित्यनेन निदाघ वैधर्म्यंदर्शितम् ।

[1]सौम्ये शीतनिवारणाय चिनते शीतालु रश्मिन्तमीम्-
चित्रोऽयं यजमान एव सुलभो हेमन्तमल्लो नरैः ॥ २१ ॥
सप्ताश्वस्य करा विलक्षणतरा अद्यापि पूर्णारसम् ॥
सप्तस्वैव रसालजातिषु समं माधुर्यधुर्यायितम्-
कर्त्तुं सुष्टु यतन्त एव नितरां लोकास्त्वरन्ते च तान्-
पीडित्वा गुडशर्करोपलभिदा-तुष्टञ्जगन्मण्डलम् ॥ २२ ॥
इक्षूणांरसनिःसृतिर्हिमकृता वन्यैव संदृश्यते-
माघादौ न तथा नवा शरदि सा पङ्क्तिर्दरीदृश्यते ।
शङ्के तद्धनुषिस्थितेन रविणा कापीदृशी कारिका
यत्तेष्वेव क्रियेत हैमनरसास्वादस्य शक्तिर्यया ॥ २३ ॥
आसंतो मनुजा अहो रविरयं रक्तोऽद्य ता मुत्तराम्-
सा नक्रे विनिवेशयिष्यति हहा ? का स्माक मेवं गतिः ।
इत्येवं प्रविचिन्त्य सूर्यतनयां सम्बोध्य दुःखार्णवाद-
मोक्तुं साक मनेन, सात्विकतया धर्मद्रवाया भुवम् ॥ २४ ॥
अद्यत्वे पुनरप्यहो स भगवान् स्वर्भानुना गृह्यते
इत्येवं प्रवदन्ति दैवगणनादक्षात्रधाना बुधाः ॥
प्रस्थातुं प्रयतन्त एव सुतरां त्यक्त्वा पथं दक्षिणम् ।
गङ्गासूर्यसुताविभूषिततनुं द्रष्टुञ्जना मुत्तराम् ॥२५॥ युग्मम् ॥

इति विचित्रपराक्रमशाल्ययम्
　　जगति नो विकृतिं महिषीभटः ।
प्रतनुतेऽखिलरक्षणतत्परः
　　रविकरै र्मधुरै रविकारकैः ॥ २६ ॥

---

१ याम्येतु विपरीत मितिसुचितम् । तथा च निर्वाधमित्यत्र सावाध, मिति तृतीयपादे, याम्ये तापनिवारणाय तनुते तृप्रालु रश्मि-निलम् इति च पठनीयम् ।

अथ भटस्यकृतिं किल पोषयन्-
विधु रयं समुदेति धरातलात् ।
उदयशैलगतः कुमुदायितम्-
निखिल मेव जगत्तनुते चिरम् ॥ २७ ॥

[1]मौनव्रतः स भगवान् द्विजराजदेवः
देवस्य दीप्तिशरणस्य रणाय नक्रे ।
गत्वा विधुन्तुदतनुं व्यवधास्यतीला-
बिम्बेन चाऽत्मवपुषा व्यवधास्यतीनम् ॥ २८ ॥

[2]चिन्वन्तेऽसुखकरमत्रपर्वराजे-
राजँ स्तद्धननिचयेन पुण्यराशिम् ।
राजन्ते प्रवरबुधा हि तीर्थराजे-
[3]धुन्वन्तेऽहितकरमात्मपङ्क राशिम् ॥ २९ ॥

इत्येवं रविसचिवैः प्रणोद्यमानाः
भूपालाः सह ऋतुभिः परिभ्रमन्तः ।
संप्राप्ता भरतभुवः प्रधानाभूमिम्,
कालिन्दी-सुरसरितोः पयोरसङ्गाम ॥ ३० ॥

इति श्री भ·वि·व-सूर्य चरिते महाकाव्ये हेमन्तवर्णने
सम्पद्रक्षणन्नाम दशमः सर्गः ।

समाप्तं दक्षिणायनम् ।

१ मौनव्रत इति विशेषणेन, भाविस· संक्रान्ति-साहित्यं सूचितम् ।

२—३ उभयत्र-अन्ते इत्यस्योत्तरपदेन समासे सप्तम्या अलुक् ।

# अथोत्तरायणम् ।

## एकादशः सर्गः ।

शिशिरः

अथ वसन्त सखः[1] शिशिरः शशन्[2]
जगति सर्वरसान्परिवर्तितुम् ।
रविकरैर्यतमान इवाऽऽगतः
ध्रुवमुखैरथ नक्र-मुख-स्थितैः ॥१॥
सपदि नीरसमेव विलोक्यते
जगदहो तरणौ मकराऽऽकुले ॥
तुहिनवर्षणशीत्कृतचूषिता-
इव, रसाललता विकृता यतः ॥२॥
भजति विश्वरसेषु पुरःस्रतिम्
बहुगुणाढ्यतया मधुरो रसः ।
मधुरपूरितदण्डधरा इमाः-
स्थितिश्रुता बहुपर्वविराजिताः ॥३॥
अथ विभिन्नरसाः सुषिरै र्युताः-
नरनिपीडनशेषित-यष्टिकाः ॥
कथ मिमा ? इति चौषधिनायकात्-
श्रुतगुणा[3] रविणा किल चूषिताः ॥४॥
भजतुसर्वरसेन समर्थताम्-
अयि नरा ? मकरग्रहणातुरः

---

१ प्रतनीकरणं नूतनीकरण-प्रयोजकमिति सखित्वम् ।

२ शशन् इत्यनेनाऽसार्वत्रिकत्वं सूचितम् । विग्रहश्च दर्शितः ।

३ अश्रुत गुणा ओषध्यो न सेसवितव्या इति व्यज्यते ।

क इव सेक्षुरसो भवतामहो
भगवतस्तनुपीडनमोचने ॥५॥

भजत तीर्थवरं निधिसञ्चयम्
कुरुत पात्रवरेषु विचारतः ॥
बुधवरा विकला न भवेयुरे ?
रविरयं भगवान्विबुधः परः ॥६॥

त्यजत दुर्ग्रह मात्मविवेकतः
कतम एषु नरेषु सुपूजितुम् ॥
उचित एव मितीह विचार्य्यते
†पुरत एव ततः क्रियते कृतिः ॥७॥

शृणुत चाऽऽत्महितं विबुधोत्तमः ।
श्रुतिगतो भगवानितिपूज्यते ॥
विकुसुमैस्तरुभिश्च विकल्पितम् ।
परिणतैः स्वदलै परिपूजितुम् ॥८॥

कुरुतसँस्कृति मात्मकुलागताम्
सुकृत-सन्तन्ति-कौतुक-तानिनीम् ॥
यजत सर्वजगत्तनुपालकं
मकरषट्क[1]गते मिहिरे जनाः ! ॥९॥

मकरपीडितकः श्रुतिसङ्गतः
शशधरेण[2] पुनः परिहापितैः[3] ॥

---

† प्राचीन कविप्रयुक्ततया प्रयुक्तः । स्यात्पुरः पुरतोऽग्रत इत्यमरः।
पुरतः प्रमेगे चाग्रे—इति विश्वः ।

१ उत्तरायणे । २ शशधरेणेति विशेषणेन शीघ्र गामित्वं सूचितम् ।
३ सहचरेण त्याजितः । स्वयं त्यक्तोवा, एयर्थस्या विवक्षणात् ।

द्युमणिरात्मकरैः सकलौषधीः
परिपचन् पिवति स्वरसं किमु ॥ १० ॥

न हि समस्तरसं पिवतीह नः
प्रणिददाति सहस्रकरोऽर्यमा ।
इति वदन्निव माध्यसुमोद्गमो
जगति शिक्षयति प्रथितं प्रजाः ॥११॥

जयति सर्वसुमेषु सुमन्विदम्
नरवरद्विजमानकरं यतः ।
अथ नितान्तसुमैः सततं भृता
जयति कुन्दलतैव सुसूतिका ॥१२॥

न विकृता शिशिरानिलवेगिता
न च तुषारभृता रहिता दलैः ।
रविकरैर्न च पाचितपत्रका
जयति कुन्दलता मधुनायिका ॥१३॥

मधुरयङ्किल सर्वगतो विभुर्
मधुररूपधरस्तनुताङ्गतः ।
ऋतुषु राजति गुप्ततरोऽन्यदा
स्वसमये पुरुरूपधरो वरः ॥ १४ ॥

तरणिरात्मतनुः श्रुतिषूदितः
जगत एव, ततः श्रुति-सङ्गतः ।
हरति विश्वरसं सततं, नवम्
वितरितुं किल गूढ-विचेष्टितः ॥१५॥

---

१ अत्र कविना स्वसमान—भावना देवे दर्शिता । यथात्मनि तथा देव,-इति न्यायात् ।

अथ ददाति यवादि विपक्तये-
रुचिरमेव रसं पचनप्रियः ।
इह यवादिगणाः पचतीव भोः
हिमगिरौ सततं परिवर्द्धते ॥ १६ ॥
ईषिरसेवनसुन्दरमन्दिरै-
र्मिहिरसेवनमेदुरचत्वरैः ।
इह नरैः शिशिरस्त्वजिरादिषु
गुपिलतुल्यसुखं किल नीयते ॥ १७ ॥
हिमऋतुः शिशिरो न पृथक्तनु
अयनभिन्नगती सवितुस्त्विमे
विकृतवायुतुषारसमीरणाद्
हिमऋतुः शिशिराय विकल्पते ॥ १८ ॥
मकरतुण्डगतो मिहिरो जनाः ?
परिनिपीडित एव उदङ्मुखः ।
तत ऋतुः शिशिरो विकृतिं गतः
ज्वलनमार्गगुणा विकृता यतः ॥ १९ ॥
तुहिनदग्धदलन्न विराजते·
हिमऋतुं परितः कदलीवनम् ।
शिशिरकेण पुनर्दशनच्छदा
अपि, सुखं तुलिता सह रम्भया ॥ २० ॥
अलमहो कथया विकृतेर्नराः ।
सुकृतमेव विचारयत क्षणम् ।

---

१ क्षितितले । २ अग्निः । ३ सूर्यः । ४ इरच् प्रत्ययन्ताः सर्वेऽजिरादिषु इति च सूचितम् । ५ राजा । ६ याप्यते । ७ समासेपि, ऋत्यकः प्रवर्तते । ८ शिशिरात्मकत्वेन परिणमति । ९ ज्वलनमार्ग उत्तरायणम्, आयुर्वेदप्रसिद्धः ।

क्षणयुतः शिशिरः किल, पञ्चमी-
सुखमिता* कुसुमाकरदूतिका ॥ २१ ॥
परिणता सुतरां यवमञ्जरी
विनिसृता सहकारकवल्लरी ।
जगति पीतिमरीतियुजो[2] जनाः ?
नर-हिताः कृतयो न हि शेषिताः ॥ २२ ॥
दिशत भोजयत प्रगुणां महङ्-
कुरुत पूजयताऽथ सरस्वतीम् ।
अथ निपीतपटैस्तनुमण्डनम्-
तनुत नूतनरूपधराः स्वयम् ॥ २३ ॥
जयति विश्ववपुः सविता स्वयम्
अभिजिता श्रुतिसङ्गतया सह ।
विहरमाण उदङ्मुखरश्मिभिः
परिणमन्[3] जगतः सकलाः कृतीः ॥ २४ ॥
अथ गतो भगवान्स धनिष्ठिकाम्
मकरभीत इवाऽद्धगतोऽशरणाम्[4] ॥
सकलशामथ सा कलशे रविम्
चरणयुग्मगतं विनिगूहयेत्[5] ॥ २५ ॥
अघसमूहविनाशन-हेतुकाम्
जपतपः श्रवणादिकरीं मघाम् ॥
अधिगतो भगवानुडुपो रविम्
क्षितिजकूटगतः परिवीक्षते ॥ २६ ॥

---

१ उत्सवः ।*इता, प्राप्ता २ कृतयइत्यनेनान्वयः । ३ परिणमयन्नित्यर्थः ।
४शरणम् । ५भीतस्य गूहनमेवोचितम्,शक्यर्थेलिङ् कुम्भसंक्रान्तिरियम्।

कलशलीनतनुः सुतरामहो
क्षितिजमूलनिविष्टवपुः पुनः ।
कथमसौ तरणिर्दृशि गोचरो-
विधुरयं जडिमप्रकृतिं गतः ॥ २७ ॥

मिहिरतारकयोर्यदि सङ्गमो-
भवतु पीनरुचा शशिना सह ।
क इव सर्गगुणो भुवि जायताम्-
इतिविचारणा-कातर-मानसः ॥ २८ ॥

स समयो दिनमानतपोदिभि-
र्विनिमयेन जनाः ? पुनरागतः
तरणिरेष पतन्नुत गोलयो-
रुपचयाऽपचयेन भिनत्ति तम् ॥ २९ ॥

धनवती किल सा श्रवणाऽनुजा
दिनमियद्धि यया परिवर्द्धितम् ।
गुणवती च परं मिहिरो यया-
मकरगुप्ततनुर्भिषजेऽर्पितः ॥ ३० ॥

सुकृतिनां सरणिः शरणागते-
ह्युपकृतिः स्थितिभुक्तिदयादिभिः
प्रकटिता विशदन्नु धनिष्ठया
जगति सा तरणेरुपकारतः ॥ ३१ ॥

अभिमुखं द्युमणेर्दिवसातपा-
वुपचयं व्रजतः खलु गोलयोः ।
विषुवतो भरतस्य धरा ह्युदक्-
न कथमेति दिनं पृथुतामदः ॥ ३२ ॥

---

१ अदन्तः, तप-शब्दो निदाघवाची सान्तो घर्मवाची ।

इह मही यवपाकविचित्रिता
हिमगिरौ यवनाल-विराजिता ।
अतसिकादिचयः क्रियतेऽत्र भोः
कुसुमिताऽतसिका सह सर्षपैः[1] ॥ ३३ ॥

ऋतुरयं क्रमशोऽनुसरन् भुवम्
ऋतुपतेः किल मार्गनिदर्शकः ।
अथ जगत्प्रतनीकरणोद्यतः
नवकृतौ सुषमा परिपोषकः ॥ ३४ ॥

शिशिरदत्तजलानिलसेवनात्-
शिथिलबन्धनपीतिमराजिताः ।
मुहिर[2]रूपयुता विटपिच्छदाः-
मुचिरताम[3]नुमान्ति महीरुहाम्[4] ॥ ३५ ॥

न सलिलं कलिलं शिशिरे जनाः ?
न गगनं मलिनं नलिनं कथम् ।
मुकुलितं, तुहिनाऽनिलभूगुणैः
किमपि गुप्ततरन्त्वभिचारितम ॥ ३६ ॥

अयि शिवात्मक एष ऋतुर्यतः
समुपयाति शिवा क्षणादा इति ।
तरुदलैः परितः परिपिञ्जरैः
भवभयस्य हरं हरमर्चति ॥ ३७ ॥

विटपिभिः किल सर्वगतो विभुः
शिशिरपर्वणि सर्वदलैः शिवः ।

---

१ यत्तदोर्नित्यसम्बन्धात्तत्रेति,–हिमगिरिवाचक आक्षिप्यते ।
२ मुहिरः सुन्दरः । ३ मुचिरोदाता । ४ किवन्तोयम् ।

शिवदिने मनुजैस्त्रिदलैरिति
धरणिमूर्तिमयः पट्ठ पूज्यते ॥ ३८ ॥
अपचितो भगवान्स सहोमया
निजपदाय नरान्परिकल्पयन् ।
तरुगणापचितिं पुनरङ्करैः
सफलतां नयतीति विचित्रता ॥ ३६ ॥
तरुगणो जडता-न-परिच्युतः,
कुसुमितोऽङ्कुरितः किल मोदते ।
इति जनैर्जडचेतनभेदतः
फलभिदाऽखिलकर्मसु मीयते ॥ ४० ॥
अथ जनाः शिवरात्रिदिने समे
शिवमया वहि,-रान्तरवृत्तिभिः ।
शिवमहत्त्वविचारणतत्पराः
शिवशिवध्वनिभिः सकलञ्जगत् ॥ ४१ ॥
रहितदम्भमदादिकुवृत्तयः
विगतमत्सरवैरशुगादयः ।
[1]शि-शि-रवाःशिशिरेण सहैव वा[2]
शिवमयं किल कर्तुमितोद्यताः ॥ ४२ ॥ युग्मम् ।
शतभिषक्कृपया तरुणोऽरुणो-
निजकरैररुणैरवनिं स्पृशन् ॥
जनमनांसि नयन्नरुणस्पृहाम्
अरुणिमप्रथनाय विचेष्टते ॥ ४३ ॥
अथ विधुर्जगदुत्कलिकाकुलम्
कलितुमात्मकरैरमृताङ्कितैः ।

---

१ अनुकरणमिदम् । २ वा—इवार्थे ।

हरिगतस्य हरेरयने सरन्
धवलयन्वियदञ्चति फल्गुनीम् ॥ ४४ ॥
रविविधू विपरीतचराविमौ
परिमितिं वदतः किल गोलयोः ।
चरति येन पथा हरिगो रविः
विधुरनेन तनोति हि फाल्गुनीम् ॥ ४५ ॥
ज्वलनरोचिरियं ज्वलनप्रिया-
ज्वलनमध्यनिवेशितविग्रहा ।
जनमनस्सु मदं ज्वलयन्त्यहो
ज्वलति भूमितले बत ! होलिका ॥ ४६ ॥
जगदहो निखिलां खिलतामिमाम्-
अखिलयत् खलतामिव चाऽऽत्मनः ।
खलतटस्खलनाभिनयेन भोः-
प्रकटयत्कुरवैः स्यति होलिकाम् ॥ ४७ ॥
पूर्वायाश्चरणेषु लोलुपतया भास्वानयं भासते ।
वृक्षान् भङ्गुरपत्रकान् विरचयन्, शस्यं समुच्छोषयन् ।
निर्वीर्य्यं शिशिरं हिमालयतटप्रान्तेषु संप्रेषयन्
हेमन्तेन सहैव, तन्नरपतिं भूमौ समुज्जृम्भयन् ॥ ४८ ॥
ऋतुरयं शिशिरः सवितुः करैः, विनिहतस्तुहिनाचलमास्थितः ।
अचल एष विभिन्ननिवेशकः, सम-ऋतून्परिपाति सदा स्वयम् ॥ ४९ ॥
इतिशिशिरनिदर्शितं स्वमार्गम्, समनुसरन्नृपतिस्तु गोलमध्यात् ।
भगवति तरणौ झषाऽनुरक्ते, भरतभुवं परिमण्डयन् प्रवृत्तः ॥ ५० ॥

इति श्रीभगवद्विभूतिवर्णने सूर्यचरिते महाकाव्ये, शिशिरवर्णने प्रतनीकरणं नाम, एकादशः सर्गः ॥

—:-*-:—

# द्वादशः सर्गः ।

*अथहोलादिवर्णनम् ।*

वागिन्द्रियस्य विषयो निखिलं बचो भोः
तृसन्न तावदिदमेव न वक्ति सर्वम् ।
औत्सुक्यमेतदति पालयमानमास्ते
गायामि गोप्यमपि होलिकया कदा नु ॥ १ ॥
चेतःप्रसादनकरी परि-हासपुष्टा
वाग्वह्निदत्तमदना दमना चुरायाः ।
वाणीलताकुसुमदाम-सुमेरुकल्पा
होला स्वभावविकसद्वदना घटेऽर्के ॥ २ ॥
हास्याङ्कुरा घटगते तरणौ जनानाम्
प्रादुर्भवन्ति हृदयेष्विव पादपेषु ।
ते कोरकोदयमिषेण हसन्ति यूयम्
प्रत्यक्षहास्यकलयोद्गिरताऽङ्कुरान् तान् ॥ ३ ।
हास्योदयाय सकलानपि वाग्विलासान्
निर्मातुमेव रचिता मुनिभिस्तु होला
हास्यं न चेज्जनमनस्तु लताद्विकासः
[१]व्याकोशतां हिरुगहो प्रजनं कथं स्यात् ॥ ४ ॥
रत्या जगज्जनितमेव रतिः प्रसन्ना-
हासं स्वदास्यचतुरं प्रथमं प्रसूते ।
हास्याय बालकवचांसि यदि द्रवन्ति
[१]स्वोत्पत्तिहेतुरतिचेष्टितमेव यावत् ॥ ५ ॥

---

१ व्याकोशतां हिरूक्=मनसोविकाशं विना ।

१ स्वशब्देन हास्यम् ।

सेयं रतिर्भजतु काममनन्यचित्ता
बालाः कु[1]र्वन्तु सकलानपि वाग्विलासान्।
शृण्वन्तु यूयमनिशं दिनपञ्चकेन
वाग्देवतान्वयवगूढजपप्रयोगान्॥ ६ ॥
के नाम नो प्रणिगदन्ति वचःप्रयोगान्
गूढं प्रकाशमथवा सजने रहोवा।
याः कुर्वते कृतितती[2]र्नच ता विना तान्
[3]नैवाकृतिं दिशति जातु जनाय होला॥ ७ ॥
एतद्वसन्ततिलकं भरतस्य भूमौ
हास्यं नृणां मनसि पूषणि कुम्भगेऽद्य
स्वाभाविकं मुनिवरैरपि नैव रुद्धम्
वाचैव कामशमनेन नुतं परं तत्॥ ८ ॥
यो नाम नेच्छति गिरां सकलान्प्रयोगान्
गोप्यान्वसन्तकलिकोद्गम-कालकेऽपि।
सोऽयं रहो वदति बाहुयुगोपगूढाम्
बालां बलादिव विबोधयितुं नवोढाम्॥ ९ ॥
सौराः करा जगदहो विनियोजयन्ति-
चित्रासु चित्तनिलयासु दशाऽवलासु।
तन्नूतनाः कृतितती: सुवतेऽवला स्ताः
याभिः पुनर्नवमिदं सततं विभाति॥ १० ॥

---

१ कु शब्दे। २ मानसंवा वाचिकम्वा शब्दप्रयोगं विना कस्यापि कार्यस्य कर्तुमशक्यत्वाद्, होलिका-प्रतिपाद्यस्यार्थस्य प्राणिमात्रेणापि क्रियमाणत्वात् न केनापि वर्जयितुं शक्या होला–इत्युक्तं, गूढं प्रकाशमित्यादि।

३ नास्ति कृतिर्यस्य विषयस्य तम्।

एतादृशा यदि कराः प्रसरन्ति भूमौ
ग्रीष्मेऽपि सौम्यदिशि शीततरे प्रदेशे ।
तस्मिँस् तदैव सुरभिः सुरभिं करोति
भूमिं वसन्ततिलकेन नवाङ्कुरेण ॥ ११ ॥

हासोद्गमो रविकरैर्वृषभस्य शृङ्गे
स्पृष्टेऽङ्कुराश्च कलयन्ति नु [1] केतुमाले ।
नूत्नानि मानवमनांसि विचित्रवाचाम्-
प्रायः प्रयोगनिपुणान्यथ हास्यवन्ति ॥ १२ ॥
[2] भद्राश्वके निजकरान्प्रतनोति भानु-
रश्वास्यगो विविधभावकरानजस्रम् ।
एवं हरौ [3] प्रकुरुतेऽथ हिरिंसमयेन-
साकं [4] कुरून् भरतखण्डतिभान्करोति ॥ १३ ॥
वर्षन्तु भारतमिदं बहुचित्ररूपम्-
रत्नाकरेण गिरिणा च समीरितेन ।
हृष्यैव कोष्णहिमशीतसमीरणेन-
मिश्रं, तनोति निखिलानपि भावसंघान् ॥ १४ ॥
लावण्यमत्र निखिलं लवणानिलेन-
सञ्जायतेऽथ सुषमा च सुषीमवातात् ।
शारीरकं बलमहो हरिदश्वतापाद्-
यन्मानसञ्च सलिलैरथ मानसाप्तैः ॥ १५ ॥
सूरे कुलीरनिलये धरणीसुराणाम्-
उत्कण्ठितानि हृदयानि तु पाठनाय ।

---

१ यूरोपप्रदेशे । तत्र, अप्रैल्फूल् इति हास्योदयः ।
२ महाचीनदेशे । ३ रूसप्रदेशे । ४ उत्तरअमेरिकाया दक्षिणेन-भागेन । ५ दक्षिणाऽमेरिका प्रदेशे ।

गानाय सिंहसदने जनतामनांसि-
विन्ध्येन साकमिव सोत्कलिकानि भान्ति ॥ १६ ॥
कन्यागते क्षितिभुजां तरणौ रणाय-
सन्नद्धतामनुभवन्ति मनांसि नूनम् ।
वाहा[1] अमी सहजधर्ममनुव्रजन्तो
दर्पं स्वकीयकरणोन्नमितं वदन्ति ॥ १७ ॥
तौलौ विशां विशति चेतसि कोऽपि भावः-
स्वाभाविकः स्वधनराशिविभावको यः ।
येनैव कोशनिचयाश्च विशां कुमाराः-
अल्पीयसैव गणयन्ति न विस्मयन्ते ॥ १८ ॥
दीव्यन्त्यतो, न, धनराशिजिहीर्षया, नुः-
मत्ता न वा स्वविभवस्य, जिहासया वा, ।
एताः कला विकलता—हरणाय नृणाम्-
स्फूर्त्यै स्वधर्ममननाय, न, विस्मयाय ॥ १९ ॥
सांकर्यभावविकलो नियतोऽपि भावो-
ह्यन्यादृशः कुजनचेतसि भाति नूनम् ।
सम्भावयन्ति सुजना नियमेन भावान्-
भावप्रयोगनिपुणान्[2] भजतां बुभूषुः ॥ २० ॥
सर्वः प्रयोगविकलैर्विकलीकृतोऽयम्-
आचार एष मनुजा ? मनुना प्रणीतः ।

---

१ अश्वा मुख्यसेनाङ्गाः, स्वाभाविकं धर्मं, रणकर्मयोग्यामोजोयुतांस्फूर्तिम् , अनुरन्तः स्वकीयान्तः करणोद्भूतं दर्पम्, अन्तः सारमौत्कण्ठ्यमितियावत्, वदन्ति प्रकाशयन्ति । २ अनुष्ठान प्रयोग निपुणान्, भाव्यते साध्यते फलं येन स भावः, इति—कर्तव्यतायुतो विधिः ।

त्रैवर्गसाधनमहो विपरीतमेव-
पुष्णाति राक्षसकुलान्यविधिं प्रयुक्तः ॥ २१ ॥
तद्यूयमद्य सममेव वसन्तकेन-
वासं विधत्त नितरां भरतस्य भूमौ ।
वासन्तिकीं श्रियमिवात्मकृतिं तनुद्रुम्-
सर्वं जगन्नवतमं कुरुते वसन्तः ॥ २२ ॥
यत्प्रत्नहानकरणेन नवाङ्कुराणाम्-
प्रादुर्भवोभवति भूमिरुहेषु भव्यः ।
भूयात्स एव च भवत्सु बुभूषुभावः-
भानुः स्वभानुभिरलं कुशलं करोतु ॥ २३ ॥
इति जगति पुराणं नूतनीकर्तुमेषः-
नुदति किल वसन्तं सर्वभावेषु सन्तम्[2] ।
प्रकटितमहिमाऽथो भाति पुष्पाकरोऽयम्-
नवमिव भुवनं द्रागात्मशक्त्या सिसृक्षुः ॥ २४ ॥
विभजति जगतां यो भावसंघान् विचित्रम्,
विविध-किरण-जालै-र्जीवयञ्जीवलोकम् ।
त्रिदिवनरकभेदान् यः स्वगत्यैव भिन्ते,
तमखिलकृतिशक्तं भानुमेनं नमामः ॥ २५ ॥

इति श्रीभगवद्विभूतिवर्णने गोलविद्यायां श्रीसूर्यचरिते महाकाव्ये,
हास्याङ्कुरसमालोचने वसन्ततिलकन्नाम द्वादशः सर्गः ।

———:-०-:———

१ तद्धै रक्षांसि गच्छति—इति स्मृतेः ।

२ सर्वभावेषु सन्तमित्यनेन व्यापकता वसन्तस्य दर्शिता, न केवलं तरुलतादिष्वेव किन्तु भावमात्रे वसन्तः, इति ।

# त्रयोदशः सर्गः ।

ऋतुचरिते—वसन्तोत्पत्तिः ।

अजचरणतुरीयपादयाते-
भगवति तस्य करा वरं स्पृशन्तः ।
नवमिव भुवनं चिकीर्षवो यत्-
कमपि रसं व्यनिवेशयन् रसायाम् ॥ १ ॥

अयमतिचपलो रसो रसानाम्
जननकरः करणां नवाङ्कुराणाम् ।
धरणितलनिविष्टमूलवल्कै-[2]
र्निपुणतरं परिपीयते महीजैः[3] ॥ २ ॥

अथ निखिलशरीरपूरितोऽयम्
तनुकलिकाकलनेन वल्कलाग्रात् ।
अरुणकिरणकारणं प्रभिन्दन्
कुसुमितकिंशुककाननाद्युदेति* ॥ ३ ॥

नसकलकरणोज्झितन्नराणा-
मिव, विशदं भवतीह भिन्नजन्तोः ।
अथ तमसि नितान्त-निष्ठितानाम्
भवति हि वाल्कलमेव भूरुहाणाम् ॥ ४ ॥

अरुणसितनिपीतकृष्णरूपा-
ण्यपि, नितरां न भजन्ति वल्कलानि ।

---

१ पूर्वाभाद्रपदा । २ करणः । ३ कर्तृभिः । ४ क्रियाविशेषणम् ।
* कारणगुणाः कार्यगुणमारभन्ते, इति-नियमोदर्शितः ।
५ एकेन, त्वगिन्द्रियेणैव वृक्षाणां सर्वेन्द्रियव्यापारः ।

स्वजनितकुसुमैः समानभावम्
सुरभिरयन्नु विचित्रशक्तिरीशः ॥ ५ ॥
सुरभिरयमथाऽम्रकुड्मलानाम्
समकलानां कलयन्नु वल्कलानाम् ।
व्यभिचरति तु पल्लवेषु यत्तद्-
वदति जना ? नियतो नकोऽपि भावः ॥ ६ ॥
सममपि भुवनं नवं वितन्वन्
कुसुमचयान्किरतीव भूरुहेषु ।
सममपि सुमनोभिरात्तधन्वा
मनसिशयः शयनं भिनत्ति नूनम् ॥ ७ ॥
गणयितुमहमुत्सहे न वृक्षान्-
न च कुसुमैः खचिता वसन्तवल्लीः ।
कमिव न कुसुमानि पल्लवाँश्च-
गमयति हन्त ! वसन्त एष वीरः ॥ ८ ॥
विकसति न च पल्लवानि वा यो-
मधुसमयेऽपि दधाति नैष शाखी ।
अथ यदि विमतः करीर आस्ते
मधुदयितः[2] स च वर्द्धते विपत्रः ॥ ९ ॥
अरुणिमपरिपूरिताः[3] सखीः स्वाः
कुसुमचयैः खचिता निभालयन्तीः ।

---

१ श्लोकद्वयेन, सामान्य-विशेष-दृष्टान्त-दानेन, कारणगुणाः कार्यगुणमारभन्ते इति नियमो विघटितः ।

२ मधुनाकृतकृपः । स्वयन्तु विपत्रः ।

३ परिपूरिताः, खचिताः, इत्यतीतत्वं वसन्तानुरागस्य व्यज्यते तासाञ्च वृद्धत्वम् ,

हरितकिसलयैर्विरोचमाना
जयति विना कुसुमानि मालतीयम् ॥ १० ॥
न किमिति मधुवल्लभेयमीदृक्-
जगति लता नरिनर्ति कापि नाऽन्या ।
किसलयनिचयान्, पुनः पुनः स्वान्
मधु-विनिगूहन-तोपणे समर्थान् ॥ ११ ॥
प्रतनदलयुतेव तन्वती या,
जलधर-वर्षणा हर्ष-जातपुष्पा ।
पुनरपि शरदः[1] प्रवर्द्धमाना
मधुसुषमां विनिगूहतीव नित्यम् ॥ १२ ॥ युग्मम् ।
कतिषु च तरुषु प्रसूनजन्म-
कतिषु च पल्लवजन्मतः प्रसूनम् ।
कतिषु च युगपद्द्वयं प्रसूतन्-
त्विति गणयेयेत्सुरभिः स्वयं स्वयंभूः ॥ १३ ॥
वयमिह चकिता वसन्तलक्ष्म्या-
स्थलजलपुष्कर-नाग-नाकभूषु ।
रचितनवयुगेष्विव स्वगेन
नियतमहो सुरभिः स्वयं स ईशः ॥ १४ ॥
द्युमणिरयमहो मणिः खमध्ये-
[2]जिगमिषुरेव तनोति नूतनत्वम् ।

---

अद्यापि हरितत्वेन विरोचमाना इति रुच धातुना, वर्त्तमार्थकेन शानचात्मनेपदेन स्थिरसौभाग्यवत्तया कुसुमोत्पत्तिपर्य्यन्तंकुसुमाकर-व्यापारवतो मालती इदानीन्तु विनापि कुसुमैरभिभवति माधवी-प्रभृतीर्लताः इति व्यङ्ग्यरीतिः ।

१ शरदः प्रभृतिवसन्तपर्यन्तम् ।

२ सायनमकर-संक्रमंकुर्वन्नित्यर्थः ।

अथ सविधगतो भ्रममन्नजस्रम्-
विषुवगतेः सुरभिं जगत्करोति ॥ १५ ॥

अभिविषुवगतं मधुर्मदान्धस्-
तदितरभागगतस्तु माधवोऽसौ ।
मिलित इह वसन्त उच्यते ज्ञैः-
विषुवगतिर्मलयादवाग् दिगंशैः ॥ १६ ॥

मलयत उदगञ्चनेऽभियाति
मनुनिमितांशगतस्तु विन्ध्यशैलम् ।
रविरथमनुजा नयात्युदीच्याम्-
दिशि गिरिराजभयान्निवर्त्तते किम् ॥ १७ ॥

यदि रविरयमत्र शैलराजे
कृतवसतिर्हिम एव भूतले नो
नहि गिरिरितरः क्वचाऽपि तादृक्
न च हिमभू रविसन्निधौ क्वचाऽपि ॥ १८ ॥

गिरिरयममितानि शृङ्गकाणि
धरणितलादपि योजनोच्छ्रितानि ।
तुहिनविशदकानि तिक्ष्णकोटी-
न्यतिघनराशिपिधत्सयैव धत्ते ॥ १९ ॥

न च सुरभिनिदाघसङ्गमेऽसौ
गलितहिमो न च वर्षणेन धौतः ।
कथमिव शरदा क्रियेत नग्नः
कथमिति तत्वत एष बुध्यतेऽद्रिः ॥ २० ॥

---

१ इदानीं योजनतः सार्द्धनवन्यूनतायामपि प्राचीन—हिमस्य स्फटिकतया परिणमनात्कूटानामौन्नत्यंभविष्यतीति मन्यते कविः ।

सुरभिरयमथाऽत्र जन्तु-शून्ये
विटपितृणाङ्कुरकोरकैर्विहीने ।
तनुहिमपरिगालनेन नद्यः
सुरभिजला वितनोति हैमवत्यः २१ ॥

इममतिशिशिरं हिमानिकायाः
रविकिरणैर्गलितं निदाघकाले ।
अतिलघु जलधिं सुनीरपूरम्[1]
नयति परो न, यथा तु धातृपुत्रः[2] ॥ २२ ॥

कुरुषु च गिरिरस्ति शृङ्गवान् यः[3],
तुहिनयुतो विषुवस्थितोऽपि नित्यम् ।
इति चकितमतींस्तु वच्मि बालान्
नहि तुहिनाचलतोलकस्तथापि ॥ २३ ॥

अभिमननपरः पुरा गिरिः सः,
क्षुभिततनुः परिवृत्तसन्निवेशान् ।
सह निजवपुषा कुरूँश्चकार[5],
इति मम मानससाक्षिणी मनीषा[4] ॥ २४ ॥

हिमगिरिरिव वर्षपर्वतोऽयम्,
मुनिवचनैरवगम्यते तथाऽपि ।

---

१ पूरो जलप्रवाहे स्यादिति मेदिनी । २ ब्रह्मपुत्रनदः परः प्रतिद्वन्द्वी सिन्धुनदः एतेन ब्रह्मपुत्रसागरसङ्गमे सागरहिमालययोरतीवसामीप्यं सूच्यतेऽन्यापेक्षया । अन्यस्तु सिन्धुनदःसाजात्यात् । ३ एन्डीज, इत्यादिनामभिः प्रसिद्धो दक्षिणोत्तरायतः । ४ मनसा संकल्पितं बुद्धया निश्चितम् तथा च मनीषायास्तत्वपक्षपातो व्यज्यते तेन च परिवृत्तसन्निवेशत्वं पोष्यते इति गुणीभूतता तस्य । ५ पूर्वापरायत-त्वेन, उच्छ्रितत्वेन, च ।

उदगभिशिरसा न मान्य एषः,
तुहिनसितोऽपि समुच्छ्रितोऽपि तादृक् ॥ २५ ॥

स्थितिगिरिरिति मत्स्यवर्णितोऽयम्,
भुवनचतुर्दलपद्मकस्य विद्वन् ?
[1]त्रिषु पुनरपि पालयत्सु सीमाम्,
अयमचलो जलधिं कथं प्रविष्टः ॥ २६ ॥

जलधिरयमगाधखातरूपो-
यदि न भवेत्सलिलं धरातलेऽस्मिन् ।
कियदिति परिमातुमादरो मे-
सुरभिदशां विषयीकरोति साम्यात् ॥ २७ ॥

सुरभिरयमहो समानदर्शी-
समकलना समयस्य देशसाम्यात् ।
जलधिगिरिवरैर्विचित्रितेयम्
यदि न भवेद्धरणिः समा न किं स्यात् ॥ २८ ॥

न जलधिगिरिवर्जमस्ति भूमेः
स्थितिरपि विश्वसृजा जलं पुरैव ।
दशगुणमधिकं भुवः प्रसृष्टम्
धरणितलं कथमुन्नमेत्तदानीम् ॥ २९ ॥

यदि गिरिरहिता वसुन्धरेयम्
जलधितरङ्गनिपीडिता विशीर्णा ।

---

१ त्रिषु गन्धमादने, हिमवति, माल्यवति च, गोलसूत्रे द्रष्टव्यम् भद्राश्व ( चीन ) भारत,-यूरोप ( केतुमाल ) उत्तरकुरु ( दक्षिणाऽमेरिका ) इति चत्वारि वर्षाणि चतुर्भ्योमर्यादागिरिभ्योवहि,भुवन पद्मस्य चत्वारि दलानि, मध्येवर्षपञ्चकमित्यर्थः ।

कलुषजलमयी प्रपानकाभा-
किमितितदा न विलोक्यते बुधेन्द्रैः ॥ ३० ॥

धरणिजलसमीरनोदनेन
तरणिरयं गगने चरञ्जगत्याम् ।
नवकृतिपरिवर्त्तनाय नूनम्
विविधऋतून् गतिभेदतो विधत्ते ॥ ३१ ॥

अभिमुखपतिता मरीचिभर्तुः-
शिशरवसन्ततपास्तु पृष्ठतोऽन्ये ।
मकर-गतिकुलीर-यात्रयाऽमी-
विबुधवरं परियन्ति चित्रगत्या ॥ ३२ ॥

इममिह नियमं बुधा विदन्तु-
विषुवगमे सुरभिं तनोति भानुः ।
शरदमिह ततो विनिगमे चेत्-
किमिति तदा भवतीति याम्यगोले[१] ॥ ३३ ॥

विषुवगतिमितो रविः समं तम्-
यदवधि कारयते करैः स्वकीयैः ।
तदवधि सुरभिः समः समस्मिन्-
धरणितले, तुहिनाचले तु चित्रः ॥ ३४ ॥

गिरिरयमितारादिभिन्नरूपस्-
तरुहरितैर्विषयैः परीत एव ।
स्वयमतिविततो महीकिरीटस्-
तुहिनसितः स्वयमेव पुष्पिताग्रः ॥ ३५ ॥

---

१ ऋतु कुदम्बे द्रष्टव्यम् ।

तुहिनगिरिगतेषु सुक्कमादौ-
यवकणिशैः सुतरां सुपक्कबीजैः
विषुवति तरणौ महीनिपीता
सुरभिमिमं सुरभिं करोति धन्या ॥ ३६ ॥

इति जगति समस्तान् भावयन् भावसंघान्
द्युमणिरयमिदानीं रेवते रेवतीभ्यः ।
अथ शुभदिवसाय प्राप्यवर्षान्तवृद्धिम्
कृतसवनजपार्चः सेवते ना नवत्वम् ॥ ३७ ॥

विधुरयमिह देहं द्यन्निवाऽऽभानजस्त्रम्,
निजतनुनवतायै नूतनत्वप्रियो हि ।
व्रजति तरणि विम्बं तेजसा दुर्विगाहम्
नहि मिलति नवत्वं तानवं संविहाय ॥ ३८ ॥

इति श्री भ. वि. व. श्रीसूर्यचरिते महाकाव्ये वसन्त वर्णने
नवीकरणन्नाम त्रयोदशः सर्गः ।

---

१ सिक्कम इति लोके । आदि शब्दात्-अपर-ब्रह्मदेशः नेपाल-देशः । कूर्माचलदेशः । गाढवालदेशः । यामुन देशः पञ्चनदस्या, र्वाचीनो भागः । उत्तरीय-भागेषु ज्येष्ठा-षाढ पर्यन्तम् यवादिपाकस्य दृश्यमानत्वात् । सर्वत्र भूस्थानेषु तुल्यमेव । अत्रेदं वोध्यम् । त्रिधा-भारत-भूमिः । प्रथमा हिमालयस्था सर्वोन्नता । द्वितीया विन्ध्यादि पृष्ठस्था, उन्नता मालपद्वाच्या (प्लेटो) इति इङ्गलिश भाषा प्रसिद्धा ।
तृतीया समतला गङ्गादितीरस्था, हिमविन्ध्यमध्यवर्त्तिनी । सिन्धुतीरस्था च पञ्चनद-सिन्धु-देशरूपा । यमुना-पश्चिमस्था-पञ्च नदपर्यन्ता तु समतलापि, अन्याभ्य उन्नता, मरुभूमिः । समुद्रतीर स्था च कर्णाटक-भूमिः समतला, भारतस्य प्रसिद्धा । हिमालय-भूमिस्तु विचित्रा पदे पदे विभिन्न-सलिलानिल-विरोचमाना वर्णयितुम शक्या, स्थावराणां हिमालयः-इतिवचनमवयवशः सङ्गमयन्ती दृश्यते । तथापि सामान्यतस्त्रिधा । भूस्थानं, प्रायो हिमाच्छादिता भूमिः । ग्राम-नगरार्हा द्वितीया । तीरभूमिः, ग्रीष्मताप-बहुला ३ या । नित्यं हिमाच्छादितस्तु हिमपर्वतः, अगम्य विषयः, इति निदाघे वर्णितः ।

# चतुर्दशः सर्गः ।

*अथ वसन्त-सुषमा ।*

---

वसन्त-सुषमां बुधा ? रवि-विधू सहैवोदितौ-
सम विषुवरेखया रविदिनेऽश्विनी-सङ्गतौ ।
विचित्र-किरणार्चिषा निखिलगोल संभासना-
ज्जगज्जनककारकौ प्रकुरुतः स्वयं सांप्रतम् ॥ १ ॥
सहस्रकरदीधितिर्मकरकर्कयोः [1]सांप्रतम्-
तनोति रुचिरातपस्फुरित-तुल्यरात्रिन्दिवम् ।
न शीतविकलं जगन्न च निदाघतान्तन्तत-
स्तृणाति नवतां नृषु स्वकृतिचातुरीचारिणीम् ॥ २ ॥
चिनोति कुसुमानि ना प्रचुरपाटलादीन्यहो-
सुनोति विबुधान्समान्यजति नौति जोहूयते ।
जपेन पुनरप्यहो तरणिमण्डलस्थं परम्-
धिनोति, वृषसेवया वितनुते जगन्मङ्गलम् ॥ ३ ॥
महीतलमहो ध्वजैररुणपीतपालाशकैः-
सुरालयसमुच्छ्रितैः श्रयति पुष्करं, पुष्करैः ।
परीतमिव दर्शयन्बुध[2]वचः खपुष्पाश्रयम्-
करोति सफलं, बुधो वदति नाऽर्थशून्यं वचः ॥ ४ ॥
शरीर-परिरक्षणे विविधजायुसेवोत्सुकाः-
जनाः ! प्रथममद्य भोः कुरुत निम्बपत्राशनम् ।

---

१ सांप्रतमित्यनेन संवत्सर प्रवृत्तिः सूचिता ।
२ गगनारविन्दं सुरभि-इत्यादि ।

प्रवालमुदितं, पुनः कुसुममुद्गतं कोमलम्-
विचित्र-रमणीयता-निलय एष निम्बद्रुमः ॥ ५ ॥
अरिष्टतरुसेवनं कुरुत सर्वतः सादरम्-
हरेदयमरिष्टदान् स्वयमरिष्टनामा गदान् ।
प्रवाल-दलवल्कलैः सकुसुमैः सकाष्ठैरहो-
नृणामुपकृतिं विना [1]नयनमेष कर्तुं क्षमः ॥ ६ ॥

कथां शृणुत गोलयोः कृतयुगादिमानं समम्-
रवीन्दुगतिभेदजं निखिलमेव तिथ्यादिकम् ।
सुवेषपरिमण्डिताः सकलबान्धवैः संगताः
शरीर-सुषमां नवां तनुत [2]वत्सरं सौख्यदाम् ॥ ७ ॥

प्रपश्यत कलानिधिं गगनमण्डले मेचके-
समानरुचिरप्ययं निकषहेमरेखोपमः ।
विबोधयति संगतां तिथिमिमां द्वितीयामहो
कलागतिविचारणानिपुणतापरान् मानवान् ॥ ८ ॥

कलानिधिरयं सरन्तरणिमण्डलात्स्वां कलाम्-
प्रवर्द्धयति सांप्रतं क्रमश एव कान्तिं दधद् ।
विबोधयति मानवानियमितीति गोला[3]र्द्धता-
विबोधन-परान् सुरान् भजत पूजया मानवाः ! ॥ ९ ॥

पुरा धरणिमण्डले वहति सारवे मारुते-
वसन्तकुसुमोद्गमैरुचिरताममेयाकृते ।
अमेयगुणकीर्त्तनोऽगणितभूतिरीशः परः-
स्वयन्नु कुसुमाकरोऽवतरतिस्म विश्वाश्रयः ॥ १० ॥

---

१ नेत्रे निमील्येति-लोकोक्तिः । अचक्षुष्यमित्यपि-आयुर्वेदे ।
२ अत्यन्त संयोगे द्वितीया । ३ अष्टमीचन्द्रः ।

वसन्त-सुषमाप्रदां भजत घर्ममध्यस्थिताम्-
पुनर्वसु-युतां तिथिं नवकलात्म-चन्द्रान्विताम् ।
पुनर्वसुयुता ऋषीनतिथिदेवपितॄन्मुदा-
यजेम इति वाञ्छया नवकलात्मभक्त्या[1] युताः ॥११॥
युता विविधवर्णकैः[2] सितनिपीतशोणादिभिः-
पलाशिभि[3]रियं मही न खलु रोचते मानवाः ?
यथा सुरभिरूपिणो भगवतो विभूतीर्नवाः-
प्रसोतुमिव बिभ्रती भजनदानपूतान्नरान् ॥ १२ ॥
मही महिमशालिनी मुनिवरैर्मता मानवी-
विशुद्धहृदया दयाधृतियुता कृतिर्मानवी ।
स्वयं यदि दुराग्रहा भवत मानवा दानवी-
कृतिर्विरहिता क्व सा भवति यत्सुपूज्या मही ॥ १३ ॥
विचित्रतरुपल्लवा रुचिरपुष्पपत्राऽनिला
विभिन्न-खगकूजना-जनित-गीत-दिव्यस्वना ।
मनोहरनवोद्गतप्रचुरपत्ररम्भाद्रुजा,
वसन्तसुषुमा मदं जनयितुन्नु यूनोः क्षमा[4] ॥ १४ ॥
क्षमातलसमुद्गतं किमपि गोलमुद्भासयन्-
मुहुर्गगनमण्डलं किमिति चित्रमाक्रामते ।
मनोजपरिजृम्भणास्फुरितसर्वदिङ्मण्डला
विकाशिवदना पुनर्भवति दिङ् मघोनी किमु ॥ १५ ॥
कलानिधिरयं रवेरपसरन्कलामात्रतो-
भुनक्ति दिनमेककं क्रमश एव दाक्षायणीः ।

१ श्रवणं, कीर्त्तनं, विष्णोःस्मरणं, पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इतिनवधाभक्तिः, भागवते ७ मे । २ नानावर्णैः । ३ तरुभिः, मांसाशिभिश्च । ४ क्षमा इत्यत्र सूचितस्योद्दीपनस्य, निवेशयति स्वंमुखं क्षितिजगो मघोन्या मुखे-इत्यन्तेन, समासोक्त्या निर्दिशता, संभोगजनकता ।

चतुर्दशदिने रवेरभिमुखं सगोलार्द्धकम्[1]
प्रमाप्य स्वयमप्यहो क्रमश एव गोलायितः[3] ॥ १६ ॥
अथो सकलकान्तिभृन्निखिल-गोलमुन्मादयन्
करैरमृतगोचरैर्भुवनमेव संसेचयन् ।
विचित्रगतिरप्यहो विषुव एव चित्रां गतो-
निवेशयति स्वं मुखं क्षितिजगो मघोन्या मुखे ॥ १७ ॥
अयं रविरहोऽश्विनीं त्यजति कष्टतः सांप्रतम्-
हसन्निति विधुः पुनर्गगनमण्डलं स्वश्चति[4] ।
रविस्त्वरुणमण्डलः श्रयति कुञ्चितो वारुणीम्-
प्रतापनिधिरप्यहो जगति शीघ्रगाल्लज्जते ॥ १८ ॥
[5]चतुर्दशगुणांरवेरपसरञ्, जगन्मण्डलम्
[6]चतुर्दश,मितंवदन्नवतिभिस्त्रिराश्यंशकैः ।
चतुर्दशकलाः क्रमादुपचयेन सन्दर्शयन्-
चतुर्दशविपर्य्ययाद्वदति गोलविद्यां समाम् ॥ १९ ॥
समाश्वरति भानुमान्-जगति भानुराश्यंशकान्[7]
खषट्त्रिदिन ३६० कारकान् विधुरयं स्वमासेन तान्
अहो द्विजनृपं वयं प्रतिदिनं यदेकोदयम् ।
प्रतीम इतिकल्पना कथमिहाऽद्य[8] संगच्छते ॥ २० ॥
निर्दोषे नभसि सरन्सुधांशुरेषः
स्वातन्त्र्यं कलयति नैज-वैभवेन ॥
संरूढान् रविकिरणैर्हि भौमभावान्
संसिञ्चन्नमृतकरैः करोति मासान् ॥ २१ ॥

---

१ सप्तमराशिस्थितत्वेन । २ पश्चिमगोलार्द्धम् । ३ अस्मिन्नुदये । ४ सुष्टुगच्छति । ५ अत्रचन्द्रचारः सुष्टु दर्शितः । ६ दशाचतुष्टय-समाहारम्, इतं, प्राप्तं जगन्मण्डलं, गोलं सूचयन्नित्यर्थः ७ इमे अंशका एव अत्रांशकाः । ८ इह-एतस्मिन्गोले, अद्य-एतस्मिन् कल्पे ।

चैत्रीयं विधुकिरणानवाप्य चित्रान्
राजन्ती रजनिमिमाः प्रियानुरक्ताः ।
सोत्कण्ठाः विरहवतीः प्रकुर्वती वा[1]
गोलार्द्धे[2] तुहिनतनुं निवेश्य भाति ॥ २२ ॥
गोलार्द्धे तुहिनतनुः प्रमाप्य सम्यक्
कौमुद्या निखिल-निशीथिनीं विरोच्य ।
पूर्वस्यामरुणकरैर्विभासितं खम्
दृष्ट्वाऽगात्प्रियरजनिः परत्र गोले[4] ॥ २३ ॥
संवेशात्तमसि निलीन-सञ्ज्ञमेतत्
संपश्यन्पुनरुदियाय लोकबन्धुः ।
ब्रह्माण्डं निजघृणिभिर्विभासयन्स्वम्
याथार्थ्यं दिनमणिभावमीहमानः ॥ २४ ॥
नाके वा वियति रसातले रसायाम्
प्रज्ञायां मनसि निलीनमन्धकारम् ।
प्रोद्यन् यो लयमनयन्नयं जनाय
कारुण्यान्नयति नमोऽस्तु भानवेऽस्मै ॥ २४ ॥
इत्येवं मनुजवरैः प्रणम्यमानः
सर्गादेः स्मरणत एव सिद्धिकारी ।
सप्ताश्वः स तु भरणी-समीपयायी-
व्यारोहत्त्रिककुदमेव सिंहलस्थम् ॥ २६ ॥

इति श्रीभगवद्विभूतिवर्णने सूर्यचरित-प्रयोज्ये ऋतुचरिते
महाकाव्ये वसन्तसुषमा नाम चतुर्दशः सर्गः ।

---

१ वा-इवार्थे २ विषुवरेखायाम् । ३ पूर्वगोलार्द्धम् । ४पश्चिमगोलार्द्धे ।
५ शयनात् । ६ लुप्त चेतनम् । ७ दयालुत्वं सूचितम् । ८ किरणैः ।
९ त्रिकूट-पर्वतम् ।

# पञ्चदशः सर्गः ।

*गिरिदुर्गयात्रा*

उपद्वीपे सिंहलेऽस्मिन्भरणीतनुसन्निभे[1] ।
भरण्यामागतः सूर्यो विभूयात्सकलञ्जगत् ॥ १ ॥
उपद्वीपः सिंहलोऽयं [1]पद्मपत्रनिभोऽब्धमसि ।
क्षाराब्धे, त्रिककुन्मध्यो भारतो[2]भिमुखः स्वयम् ॥ २ ॥
अत्रासन् राक्षसा पूर्वं भरणीगुणभागिनः ।
रामरावणयोर्युद्धनिनिष्पिष्टा लोककण्टकाः ॥ ३ ॥
मन्येऽहं भरणीभस्य दुष्टत्वमत एव हि ।
यद्राक्षसनिवासेन खगाञ्चारयति प्रभून् ॥ ४ ॥
अथवा भरणी सेयं राजनीतिविशारदा ।
अद्वितीयं वारिदुर्गं सिंहलं नैव मुञ्चति ॥ ५ ॥
भरणीव नरा यूयं भारतीया ? न मुञ्चत ।
सिंहलं दुर्गराजञ्चेद्भरणी वो न पीडयेत् ॥ ६ ॥
सिंहलो भारतीयानां दुर्गराजो भवेद्यदि ।
सार्वभौमपदं प्राप्ता न च्यवेरन्कदाचन ॥ ७ ॥
सिंहलाक्रमणे भानुर्[3]माधवं जनयत्यहो ।
मा[4]धवः सिंहलाक्रान्त्या विभीषणमसेचयत् ॥ ८ ॥
माधवः सिंहलं नित्यं विभीषे[5]णा-वशंवदः ।
भानौ नक्रे च कर्के च न जहाति गुण[6]प्रियः ॥ ९ ॥

---

१ उभयत्र समानोर्थः । २ उत्तराप्रवणः ३ वसन्तं, वैशाखं वा । ४ सीतापतिः । ५ वैशाखपक्षे घर्मः । ६ विभीषणे भक्तिः, वैशाखपक्षे सूत्रं सूर्यमण्डलगतम् ।

अथवा माधवो नित्यं विषुवत्युभयाश्रयः
विषुवस्योत्तरेणाऽयमक्षांशैः रसकैः स्थितः ॥ १० ॥
माधवेऽनात्र जलधौ सेतुं बद्धाऽभिगम्य च ।
रक्षस्तुषारा निहता माधवेनेव मानिना ॥ ११ ॥
निस्तपे निस्तुषारेऽत्र निवसन्माधवः सदा ।
मासद्वयं विश्वरूपः प्रादुर्भवति सर्वतः ॥ १२ ॥
सेतुबन्धादुत्तरस्यां भारतं मानसावधि ।
सेतुबन्धे दशाक्षांशा मानसे खाग्नितोऽधिकाः ॥ १३ ॥
[1]देवताराः श्रुतावुक्ता कृत्तिकाद्याश्चतुर्दश ।
तास्वेवाऽऽक्रमते भानुर्भूमाऽवस्यामुदग्गतः ॥ १४ ॥
देवभूमिर्वसन्तेन गच्छता मानसाय तु ।
कुमारिकाख्या सर्वाऽपि रोचते सहिमालया ॥ १५ ॥
कृत्तिकासु गते सूर्ये वसन्तो हिमपर्वते ।
विशेषान्मानसे खण्डे राजते खण्डयञ्जडम् ॥ १६ ॥
मलयः सेतुबन्धश्च समरेखास्थितौ मतौ ।
मलयाद्विन्ध्यशैलोऽयं वर्णितः [2]पूर्वमे हि ॥ १७ ॥
विन्ध्याचलादुत्तरस्यामक्षांशैस्त्रि, चतुः शरैः ।
हिमालयो [3]मध्यभागाद्वायव्याभिमुखः क्रमात् ॥ १८ ॥
काश्या वायव्यदिग्भागे द्वात्रिंशदधिके शते ।
क्रोशे विराजते बांसवरेली, नगरी शुभा ॥ १९ ॥
त्रिंशत्क्रोशे चित्रशिला वरेलीनगरादुदक् ।
ततस्तु मानसो खण्ड उच्यते मानसाऽवधि ॥ २० ॥

---

१ अनुराधाद्या १४ मनुष्यताराः ।
२ त्रयोदशसर्गे मलयत उगञ्जनेमियातीत्यादिना ।
३ धवलगिरिमारभ्य कश्मीरपर्यन्तम् ।

विचित्र तरुवल्लीभिरोषधीभिः समावृते ।
मार्कण्डेयाश्रमे चित्रशिला विस्मय-कारिणी ॥ २१ ॥
शिलेयं महती चित्रा नानारूपविचित्रितैः ।
विभाति दूरान्मनसि रचिता शकलैरिव ॥ २२ ॥
न मानवी कृतिरियं दानवी न च दैवती ।
अचिन्त्यशक्तिं कमपि बोधयन्ती शिलास्थिता ॥२३॥
नानाप्रवालवर्णोऽयं नानापुष्पनिभच्छविः ।
सदा सुरभिरूपाणि दधतीव विराजते ॥ २४ ॥
निर्मला रोचमानेऽयं मृदुला मृडरूपिणी ।
शर्करासु निलीनाऽद्य चित्रनद्याः प्रवाहतः ॥ २५ ॥
बोधिद्रुमाश्चित्ररूपाः शिलास्वपि बलादिव ।
कुतोऽऽप्यास्वाद्य नीराणि रोचन्तेऽङ्कुरिता अहो ॥२६॥
माधवस्तर्कयन्नेवं माधवस्य कृतीर्नवाः ।
आरोहत्पञ्चनल्वोर्द्धं भूतलात्षष्टिखातके ॥ २७ ॥
तत्र भीमहृदं सप्त हृदान् नलहृदन्तथा ।
नवकोणं हृदं दृष्ट्वाऽपश्यन्नारायणीहृदम् ॥ २८ ॥
भूतलान्नवनल्वोर्द्धमाकाश इव निर्मितम् ।
देवखातमिदं देवैरधुना नगरायितम् ॥ २९ ॥
नगरं वलयाकारं राजते परितो हृदम्[1] ।
वसन्तकृपयोद्भूतै,-र्गन्धर्वैरिव पूरितम् ॥ ३० ॥
एकोनविंशतिशतात्पूर्वं सम्बदिदं वनम् ।
पशव्यमपि दुर्धर्षं पञ्चास्यनिलयोपमम् ॥ ३१ ॥
गुरण्डप्रायमधुना मध्यदेश[2]निवासिनाम् ।
वसन्तवातसेवार्थै निदाघनिलयायितम् ॥ ३२ ॥

१ नैनीताल इति प्रसिद्धम् । २ हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः । इति मनुः ।

माधवः फाल्गुनेनैव फाल्गुनेनेव माधवः ।
भू-तापवारणार्थाय मासान्मन्त्रयतीह किम् ॥ ३३ ॥

उत्तरस्यामितोऽल्मोडाप्रदेशः सुरभिः स्वयम् ।
सरयूशोभितः शम्भुधामविप्रविराजितः ॥ ३४ ॥

अल्मोडानगरी चित्ररूपा पर्वतपृष्ठगा ।
माधवेन सदाक्रान्ता सुखदाद्वन्द्वमध्यमा ॥ ३५ ॥

सरयूजल संस्पर्श-पूतानिल-निषेविते ।
नवनल्वोच्छ्रिते शम्भुर्जागेशो दारुकावने ॥ ३६ ॥

सरयूपूर्वतो विप्रैर्मण्डितो माधवप्रियैः ।
गङ्गावलीतिविषयः शिवसेवनतत्परैः ॥ ३७ ॥

मार्कण्डेय-पुराणोक्त-चरित्र-त्रयनायिका ।
कालीमहिषशुम्भादीन् घातुकाऽत्र पराक्रमीत् ॥ ३८ ॥

देवदारुवनस्थेयमम्बिका-सहिता जनैः ।
पूज्यतेऽद्याऽपि सद्भक्त्या प्रत्यक्षशकुना शिवा ॥ ३९ ॥

शिवायाः सविधे ग्राम उपराज—इति स्मृतः ।
पन्तानां मूलवसतिर्वसन्तनिलयायते ॥ ४० ॥

कुसुमाकरसंपत्तिमुपभुङ्क्ते गुणाकरः ।
गुणाकरैः प्रपूर्णोऽयं पन्तैः पूरयते जगत् ॥ ४१ ॥ युग्मम् ।

देवदारुगिरावस्माद्दुत्तरस्मिन्गुहाशयः ।
भुवनेशो भवो भक्ताऽभीष्टभूमिर्भुविस्थितः ॥ ४२ ॥

भुवनेशगुहाभीमा भूरिभागा शिवप्रिया ।
वाराणसीगुहां यावद् धत्ते मार्गं प्रदृश्यताम् ॥ ४३ ॥

ततः कोटीश्वरस्तद्वद् गुहासस्थः स ईश्वरः ।
षडशीतिगुहाप्राये पर्वते राजते विभुः ॥ ४४ ॥

तस्मादुत्तरतः पुगेश्वरः सर्वर्तुसौख्यदे ।
निर्झरेश्वरसंसृष्ट निर्झरानिलसेविते ॥ ४५ ॥
गौरीनद्याः परे भागे द्रष्टव्यः शिवदः शिवः
देवदारुतरुच्छाया-पुष्पवाटीसमन्वितः ॥ ४६ ॥ युग्मम्
अथ गौरीनदीपूर्व दिशि माधवसौख्यदः ।
पिङ्गलाचार्यवसति, ग्रामो'वर्षायता'ऽभिधः ॥ ४७ ॥
वर्षायत्ता सर्वं इमे ग्रामाः पर्वतसंस्थिताः ।
अयं जलोच्छ्वासयुतो वर्षायत्तस्तथाऽप्यहो ॥ ४८ ॥
रसाला विविधाश्चाऽत्र सरलाः पूतनाद्यः ।
वनौषध्यस्तनुं पूतं पवनेनैव तन्वते ॥ ४९ ॥
सर्वर्तुसुखदे ग्रामे नवचन्द्रनृपे शके ।
कल्याणचन्द्रदत्ते मे पूर्वजा न्यवसन्सुखम् ॥ ५० ॥
जन्मभूमिर्मदीयेयमिति नो वर्ण्यते मया ।
काश्याः कैलासगमने मार्गः स्कन्दोक्त एव हि ॥ ५१ ॥
वासिष्ठीसविधे बालेश्वरं संपूज्य यत्नतः ।
पुष्पपत्रोद्गमैः सोऽयं सुरभिः प्रस्थितोऽधुना ॥ ५२ ॥
कृत्तिकायाः द्वितीयाङ्घ्रौ भानुमान्मलयादुदग् ।
वसन्तस्तुहिनप्राय, भूस्थानादिषु संस्थितः ॥ ५३ ॥
विधुस्तु राधाभवनादुदेति रजनीमुखे ।
दिनं सौरकरैर्दीनं नितरां रञ्जयञ्जनम् ॥ ५४ ॥
रविविधूप्रथमान्त्यभयात्रया-मनुमिता इति निर्जरतारकाः ।
जगति बोधयतस्त्विति साक्षिणी, तिथिरियं महिता सहराधया
राधया सहाचरन्सुधाकरः कानपीहकिरणान्किरत्ययम् ।
मानवा हि बदरीत्तणौषिणो, माधवो व्रजति मानसोन्मनाः ५६

१ अतएव कृत्तिका भारभ्यदशादिपरिगणना ज्योतिःशास्त्रे ।

एवं वसन्तः प्रतिवर्षमेव, कैलासयात्रानिरतो ऋषाकात् ।
मासद्वयं भारतभूतलेऽस्मिन्, प्रादुर्भवन् याति दिविष्ठदेशम् ५७

इति श्री भ. वि. व. सूर्यचरिते वसन्तनृपति-गिरि-दुर्ग
यात्रावर्णनम् पञ्चदशः सर्गः ।

---

# षोडशः सर्गः ।

*अथ गिरिदुर्गप्रवेशः ।*

कूर्माचलाद्याति यथा वसन्तः कैलासदेशं सरलञ्च शीघ्रम् ।
तथा न नेपालकसुक्रमादेः पञ्चापदेशाञ्च च ब्रह्मपुत्रात् ॥ १ ॥
बालेश्वराद्याति[1] दिनत्रयेण व्यासाश्रमं[2] मानव एव सम्यक् ।
चित्रं वसन्तस्तुहिनेन भीतः, मासद्वयं यापयतीव तत्र ॥ २ ॥
व्यासाश्रमादूर्द्ध्वमहो मनुष्यैरगम्य[3] एवेति मधुर्महात्मा ।
आषाढमासे यवपाकतुष्टः,सार्कं शकैर्याति दिविष्ठदेशम् ॥ ३ ॥
शका[4] इमे हूणजनैः सहैव व्यापारकृत्यालवणादिकस्य ।
जीवन्ति भूस्थानगता[5] न कृष्या कैलासयात्रानिरताः प्रवर्षम्[6]॥४॥
नभोनभस्यद्वयमत्र यातुम् मार्गं ददातीति मया पुरोक्तम् ।
विना शकानां कृपया न शक्ताः नरा, वसन्तः प्रभुरात्मनैव ॥५॥

---

१ अल्मोडा-मण्डलान्तःपात्ययं बालेश्वरः, उत्कलस्थो भिन्नः ।
२ व्याँस इति प्रसिद्धएव प्रदेशः । इयं भूस्थान (भूटान) भूमिः ।
३ हिमाच्छादिताभूमिरित्यगम्या ।
४ भूस्थानस्था द्विधा हि शकाः ( जोहारी ) ( दर्मिया ) इति ।
५ अल्मोडा मण्डले द्वे भूस्थान भूमी ।
६ प्रतिवर्षन्तु ।

हिमालयं विंशतिनल्वतुल्यप्रस्थेन केनाऽपि विलङ्घ्य वीराः।
कैलासदेशं शिवदुर्गरूपम् पश्यन्ति धन्या मधुना सहैव ॥ ६ ॥
अयं दिविष्ठो भरतस्य भागः परन्त्विदानीं परदेश एव।
अत्रत्यमर्त्याः शिव-धर्म,-बुद्ध-विद्यागुरूणां सततं स्मरन्ति[2] ॥७॥
घटां त्रिशूलं डमरुं सशङ्खम्, प्रेम्णा प्रयुज्यैव यजन्ति शम्भुम्।
नृत्यन्ति यत्ताण्डवदर्शनाय विस्मापयन्तीव जगद्विचित्रम् ॥ ८ ॥
पूजावसाने डमरून्सहैव विवादयन्तः सहसोत्पतन्तः।
स्कन्धेषु सप्ताष्टनवादिवीराः सर्वेऽपि नृत्यन्ति च यन्ति चोर्द्धम्॥९॥
आरोहतः पश्यति ना न चैतान्, विस्मापितस्ताण्डवलाघवेन।
परन्तु सर्वानपिताण्डवेन, मत्तान्नभस्युत्पतितानवैति ॥ १० ॥
शिवस्य लीलां विशदं वदन्तो[3] धन्या अमी भक्षविचारशून्याः[4]।
एषां द्विजाः कुक्कुरगर्दभानाम् मांसं न खादन्ति जपन्ति मालाम् ।११।
चीनस्य साम्राज्यमिहाऽस्ति, चीनः दिविष्ठतः पूर्वत एव दिव्यः।
अन्नादिकोत्पत्तिविधौ नरास्तुः बौद्धा, दिविष्ठादिषदेव भिन्नाः १२
दिविष्ठतः पश्चिमभूमिभागो कश्मीरदेशो रमणीयरूपः।
वसन्तवासेन नितान्तगौरः, विचित्रमृत्साजलवायुरम्यः ॥ १३ ॥
दिविष्ठतः सिन्धुनदः परस्ताद् वहन्नतो याम्यमुखः प्रयाति।
एतेन भूमिर्वलयायितेऽयम् विराजते मध्यगतेन चित्रा ॥ १४ ॥
दिव्याङ्गनाहासकरीः सुनारीः, विभूत्सुराल्लँज्जयतेऽयमेव।
सुरा दिविष्ठाः किलदिव्यरूपा दीव्यन्ति कश्मीरतले नृलक्षाः ।१५।

---

१ उपलक्षणमेतत्। विंशतिनल्वेभ्योऽल्पत्वस्याऽसंभवात्। न्यूनता व्यावर्तकमेवेदम्, नाधिकताव्यावर्त्तकम्।

२ 'ओम् णमो 'बुद्धय,' ओम्णमो शङ्खय, ओम्णमो धम्मय, ओम्णमो विद्यय, ओम्णमो गुरपे, इति जप्यास्तेषाम् पञ्च।

३ प्रकाशयन्तः। ४ अपि इति अध्याहारलभ्यः।

वितस्तया श्यामतला धरित्री तन्मूलखातेन विचित्रमध्या ।
फलानि सूतेऽमृतसम्मितानि करोति सार्थं स्ववसुन्धरात्वम् ॥१६॥
अयं दिविष्ठेन समं नृपस्य प्रियो निदाघार्तिशमेन देशः ।
द्राक्षादिसूत्या ऽनिलवारियोग-सौन्दर्य्यकीर्त्त्या नितरां प्रियोऽयम् ॥
सिंहलेन सहिताविमौ यदा, सार्वभौमनृपदुर्गलक्षणौ ।
कस्यचित्करगतौ तदाजनाःसूद्यमः स जगतीपतिर्भवेत् ॥ १८ ॥
सार्वभौमनृपलक्षणं पुरः शैलदुर्ग-इति कोविदैर्मतम् ।
वारिदुर्गसहितं द्वयं यदा शैलराजशिखरे किमुच्यते ॥ १९ ॥
भारतीयमनुजा ? गिरिराजे सर्वकाल-सुखदे निज-सँस्थाः
ज्ञानरक्षणकला-चरकाणाम् सन्तनुद्ध्वमचिराज्जयलाभः ॥२०॥
देशकाल-परिवर्त्तनशीलः शैलराजशिखरादुदितोऽयम् ।
मानसोन्सुखकरैर्मधुमासम् तानयन्निव नभस्यपि सूर्यः ॥ २१ ॥
हृष्टस्तापं पाप हानाय-दिन्सन्
　　भानुर्भासा भासयन्मानसानि ।
पद्मानीशाऽस्मैव विश्वस्यचिताग्र्या-
　　तन्यातन्वानःपातु भक्ताभिऽसेव्यः ॥ २२ ॥
इति सुरभिकृतिं प्रयोजयन्तौ रविशशिनौ गगने विचित्रचारौ ।
निजतनुपरिरक्षणाय भक्त्या सकलबुधान्प्रणिपत्य नौमि नित्यम् २३
　　गुरु जनचरणाब्जं ध्यानगम्यं विधाय
　　पितृवचन गुणौघान् बुद्धि-गम्यान्विधाय ।

---

१ कुसुमाकरस्य । २ द्राक्षादि सूत्याऽत्र शरत्समागमेनाऽति-प्रियता। एतेन महिषीसहितस्य दुर्ग प्रवेशः सूचितः । ३ मानवस्य दानवस्य वा देवस्य । ४ भुवनपतिः ।

६ श्रावणेपि । अतएव तानयन्नित्युक्तम् । तत्र तदा सुरभेरेव सत्वात् ।

रविचरितमुदारं वर्णयित्वा सदारः
सततमुखितचित्तो वर्णयिष्ये स्वगोत्रम् ॥ २४ ॥
आरोग्यं दिशतु जनाय भास्करोऽयम् ।
चेतस्तज्जनयतु निर्मलं सचन्द्रः ।
सम्पत्तिं वितरतु माधवः सभार्यो-
निस्तन्द्रां स्मृतिममितामुमेश एषः ॥ २५ ॥
वाराणसी जयति भूमितले पुरीयम्-
गंगातरङ्ग-पवनेन नितान्तपूता ।
यत्रत्य-वायु जलसेवन-विश्वनाथ-
साक्षात्कृतिः परिणता कवितात्मनैवम् ॥ २६ ॥
जयति जयति रूपं विश्व मेतन्मुरारेः-
जयति सकलविश्वप्रेरको भानुरेषः ।
जयति जगतिरत्नं भारतं वर्षमेतत्
जयति च गिरिरत्नं देवभूमिः[२] *स दिव्यः[३] ॥ २७ ॥
॥ इति श्रीसूर्य च.म.काव्ये गिरि-दुर्गप्रवेशोनाम षोडशः सर्गः॥
इति भगवद्विभूतिवर्णने, गोल-विद्यायाम्,
रवि-चरिते, ऋतुचरितं महाकाव्यम्,
समाप्तिमितम् । मि. अ. चैत्र ब. ८।८२ ।

---

* स-इति विशेषणम् पुष्पाकरनिवासेन पूज्यत्वं बोधयति ।

१।२।३। लिङ्गत्रय-विशिष्टविशेषणदानेन विचित्रशक्ति-शालित्वम् गिरिराजस्य सूचितमिति-जयन्तु सर्वाभगवद्विभूतयः । इतिशम् ।

इति श्रीकूर्माचलीय.-पन्तकुलावतंस-श्रौत-स्मार्त्त-विधि-विहित-पालकस्य लोकवन्द्यस्य दुर्गादत्त-पन्त-सूरेः सुतस्य, पण्डितवर्यस्य पूर्णानन्दपन्तस्य-कनीयोभ्रातुःकवेः साहित्याचार्यस्य व्याकरणतीर्थस्य दार्शनिकस्य तारादत्तपन्तस्य कृतौ स्वरचित-सूर्यचरित-महाकाव्ये-टिप्पणी समाप्ता । शुभम् ॥ टीकाऽपिलिखिता ।

## ॥ अथ गोलविद्या ॥

ईश्वरस्य कृतौ गोला, अनन्ताः परिकीर्त्तिताः ।
अनन्ता रविविष्णवीश,-ब्रह्माद्यास्तत्प्रवर्त्तकाः १ ॥
देशः सूर्यकराक्रान्तो, गोलशब्देन कथ्यते ।
भूगोलश्च खगोलश्च, स द्विधा परिकीर्त्यते ॥ २ ॥
यावद्दिवाकरकणाः प्रसरन्ति जगत्त्रये ।
तावत्स एको गोलः स्यादेकार्ककिरणोज्ज्वलः ॥ ३ ॥
द्वेधा स एष दिनरात्रिगतेर्विभागात् ।
सूर्यस्य, पूर्वपर-गोल-इतीह्या नः ।
पूर्वेऽस्ति भूरिवसुधा परगोलके तु
खण्डत्रयं भवति तद्भुवतोऽप्युदीच्याम् ॥ ४ ॥
उच्चैस्थानं गता यूयं, सर्वतः परिपश्यत ।
उदयादस्तपर्य्यन्तम्, गोलार्द्धं पूर्वसंज्ञितम् ॥ ५ ॥
यावद्भवन्तः पश्यन्ति, गगनं गोल-मापकम् ।
तावदेव हि पश्यन्ति कुरुस्थाः पश्चिमार्द्धकम् ॥ ६ ॥
जम्बूद्वीपो मिलित्वाऽयं, सर्व एव प्रकीर्त्तितः ।
नव-खण्डयुतो मेरुकर्णिको मुनिभिः स्मृतः ॥ ७ ॥
अन्ये द्वीपास्तु षट् सूक्ष्मा, मनुजानामगोचराः ।
वर्णितास्त्वेकरूपेण, पुराणेष्वत एव हि ॥ ८ ॥
जम्बूद्वीपस्य मध्ये यन्मेरुर्मुनिभिरिष्यते ।
अर्द्धं भूमेः, एशिया, वा जम्बूद्वीपः कथंभवेत् ॥ ९ ॥
यद्भूभागाद्ध्रुवो मूर्द्ध्नि, उपरिस्थः प्रदृश्यते ।
सभूभागो ध्रुवः स्यात उपचारान्मनीषिभिः ॥ १० ॥

स एव मेरुः कथितो, दिव्यदृग्भिर्महर्षिभिः ।
सर्वस्मदुत्तरत्वात्तु, दूरादुच्चैस्तु सः ॥ ११ ॥

मेरोश्चतुर्दिशमिला,–वृतवर्षमाहुः ।
खण्डत्रयन्तत उदक् त्रयमाहुरर्वाक् ।
एकं पुरः परत एकमुदाहरन्ति ।
एवं वदन्ति नवभागयुतान्धरित्रीम् ॥ १२ ॥

इलावृतादुत्तरतो रम्यकश्च हिरण्मयः ।
कुरुश्चेति क्रमाज्ज्ञेयाः खण्डा गोलार्द्धकेपरे ॥ १३ ॥
षट्खण्डाः पूर्वगोलार्द्धे भारतं किन्नरो हरिः ।
भद्राश्वकेतुमालौ च भूमेः खण्डा अमी नव ॥ १४ ॥
'यूरालात्, पश्चिमो भागो यूरोपः केतुमालकः ।
भद्राश्वश्चीन-इत्युक्तः, षट्-खण्डाः क्रमतो द्वयोः ॥ १५ ॥
आष्ट्रेलिया, आफ्रिकाच पूर्वगोलस्य याम्यगौ ।
उपद्वीपौ समग्रस्य महाद्वीपावपिस्वयम् ॥ १६ ॥
एवं सिंहल,जापान,-इङ्लैण्डाद्याः समे तथा
निविष्टा पूर्वगोलार्द्धे, जम्बूद्वीपोपगा अमी ॥ १७ ॥
अवाग् विषुवरेखाया नक्ररेखाङ्कितः स्वयम् ।
आष्ट्रेलिया महाद्वीपो मरुमध्यस्त्रिधाप्यतः ॥ १८ ॥
दक्षिणोत्तरभेदेन, द्विविधाचाऽऽफ्रिका मता ।
विषुवद्रेखया भिन्ना न समुद्रविभाजिता ॥ १९ ॥

---

१ हिमालयाद्दक्षिणभागः पूर्वी, चीनतः 'टर्की इन्एशिया, पर्यन्तं भारतवर्षम् । मैंगोलिया-चीनीटर्किस्तान टर्किस्तान-इतित्रिधाविभक्तं किन्नर वर्षम् । रूस–इति प्र० हरिवर्षम् । सैबेरिया ग्रीन्लेण्ड-भागौ-इलावृतम् । उत्तर-अमेरिकाया उत्तरोभागः, रम्यक वर्षम् । दक्षिणभागो हिरण्मयवर्षम् । दक्षिणाऽमेरिका-कुरुवर्षम् ।

एवं परस्मिन्गोलेऽपि, दक्षिणोत्तरभेदतः ।
अमेरिका, द्विधा भिन्ना, रेखावारिधि-योगतः ॥ २० ॥
अर्द्धगोले प्राक्-परस्तात्, रेखा या विषुवत्स्मृता ।
सिद्धैरंशैरुदगवाक् ततोऽयनरेखिके ॥ २१ ॥
दक्षिणायनरेखा या, कर्करेखा तु विन्ध्यगा ।
उत्तरायणरेखा तु नक्ररेखा ऽऽफ्रिकोदरे ॥ २२ ॥
दक्षिणाभिमुखे सूर्ये कर्कतो दक्षिणायनम् ।
उत्तराभिमुखे सूर्ये नक्रतस्तूत्तरायणम् ॥ २३ ॥
मध्यरेखागते सूर्ये समं रात्रिन्दिनं भवेत् ।
सन्निधानेन सूर्यस्य मध्येऽयनरेखयोः ॥ २४ ॥
यस्य सन्निहितः सूर्यः समूर्द्धोपरि पश्यति ।
विप्रकृष्टस्तु यस्य स्यात्स्यात्स तीयङ्ङीक्षते च तम् ॥२५॥
मस्तकोपरि पश्यन्ति विस्तीर्णां गगनञ्जनाः ।
तिर्य्यक् पश्यन्ति संकीर्णां वृत्तत्वाद्भू-खगोलयोः ॥ २६ ॥
अत एव दिनं दीर्घं मस्तकोपरि गच्छतः ।
सवितुश्चलतस्तिर्य्यक् क्रमाद्-ह्रस्वं दिनं भवेत् ॥ २७ ॥
ध्रुवसन्निहिते देशे सदा दूरस्थितो रविः ।
रात्रिं विधत्ते विपुलां कर्करेखागतो दिनम् ॥ २८ ॥
कर्करेखागते सूर्येऽगस्त्यपार्श्वे निशा मता ।
मकरे ध्रुवपार्श्वे तु, विषुवे समता तयोः ॥ २९ ॥
गोलमध्ये स्थिता लङ्का तत्र रात्रिं दिवं समम् ।
सदैव भवती,दानीं जलमेवाऽत्र विद्यते ॥ ३० ॥
विषुवद्रेखया भिन्नः, पुनर्गोलो द्विधा मतः ।
सौम्य-याम्य-विभेदेन, सौम्ये भूरिधरा स्थिता ॥ ३१ ॥

मेषादितः सौम्य-गोल-स्तुलादिर्याम्य-गोलकः ।
खगोलो रविगत्यैव विभक्तस्तादृशः परः ॥ ३२ ॥
खगोलस्यैव रेखाभिः सान्निध्यादुपचारतः ।
भूगोलेव्यवहारोऽयं सर्वो रेखादिना कृतः ॥ ३३ ये
पुनर्गोलो द्विधा भिन्नो दक्षिणोत्तर-रेखया ।
एवं चतुर्धा भिन्नोऽयं नवत्यंशैस्त्रिराशिगैः ॥ ३४ ॥
गोले पूर्वापरा रेखा मध्यस्था विषुवं मता ।
तथा याम्योत्तरा विज्ञैरक्षरेखा प्रकीर्तिता ॥ ३५ ॥
नवत्यंशाः पुरः पश्चात्ततो देशान्तरं मताः ।
एवं गोल द्वये ज्ञेयं षष्ट्युत्तरं-शतत्रयम् ॥ ३६ ॥
याम्योत्तराणि वृत्तानि षष्ट्युत्तर-शतत्रयम् ।
गोले भवितुमर्हन्ति ध्रुवप्रोतानि विस्तृतम् ॥ ३७ ॥
देशान्तराणि तावन्ति गोले ज्ञेयानि मानवैः ।
त्रिंशत्क्रोशैः सपादै स्तु भूमौदेशान्तरं मतम् ॥ ३८ ॥
अक्षांशरेखाः संछिन्ना वृत्तैर्याम्योत्तरैर्यतः ।
स्ववर्गसम्मितान्देशान् विभजन्ते समाः समैः ॥ ३९ ॥
अहोरात्रेण गोलञ्चेत् क्रामते भगवानयम् ।
दशभिर्विकलाभिः स देशादेशान्तरं व्रजेत् ॥ ४० ॥
षट्त्रिंशच्छत-तुल्यास्तु पला, षष्टि-कला यतः ।
भक्ता देशान्तरैर्लब्धिं दद्याद्दश-पलात्मिकाम् ॥ ४१ ॥
मनुष्यस्त्वेकघस्रेण देशादेशान्तरं व्रजेत् ।
वर्षेण गोलं परियन् पुनः प्राप्नोति स्वं गृहम् ॥ ४२ ॥
इति श्रीगोलविद्यायां सामान्यतो गोलनिरूपणम् । प्र० प्रक०
अथ लेखनरीतिञ्च हृदि धारय कोविद ?
ध्रुवद्वयगतारेखा या लङ्कास्पर्शिनी भुवः ॥ १ ॥

मध्यरेखा तु सा तस्याः प्राक्पश्चाद्देश-संस्थितिम् ।
निरक्षदेशे लङ्कायां विन्दुं न्यस्य प्रकल्पयेत् ॥ ३ ॥
नवत्यंशान् पुरः पश्चादेवं गोलद्वये न्यसेत् ।
अवागुदक् तथाक्षांशान् कल्पयेद् गोलवित् स्वयम् ॥ ४ ॥
इंङ्गलैण्ड, स्थाद् ग्रंथनिच्,-स्थानात्पाश्चात्यैः कल्पितं यथा ।
तथा भूमध्यरेखातः सर्वं कल्यं मनीषिभिः ॥ ४ ॥
मध्यरेखा भारतेतु मुनिभिः कीर्तिता यथा ।
"तत्वेन्दुयोजनैर्लङ्का-देवकन्यान्तरं स्मृतम् ।
तस्याः स्वामी खनागैस्तु विंशत्या सागरः स्मृतः ॥ १ ॥
वत्स-गुल्मस्ततो ह्रिंभि रुज्जयन्यग्रपञ्चभिः ।
कुरुक्षेत्रं खनागैस्तु सुमेरुस्तत्त्वपन्नगैः" ॥ २ ॥
इति माने महान् भेदो भूचित्राद्वर्त्तमानकात् ॥ ५ ॥
निरासनीयः सन्देहो दैवज्ञप्रवरैस्ततः ।
निरक्षदेशो, लङ्केयम्, सिंहलस्था तु रक्षसाम् ॥ ६ ॥
भूचित्रं कारयिष्यामि पूर्वोक्तं शास्त्र सम्मतम् ।
देशाञ्च् चक्रे लेखयिष्ये रेखातः प्राक्-परस्थितान् ॥ ७ ॥
इति श्रीतारादत्त-पन्त-विरचिते गोले द्वितीयं प्रकरणम् ॥

अथ वर्षपर्वताः—

निषधो माल्यवान् नीलो गन्धमादन-पर्वतः ।
इलावृतस्य क्रमशो ह्यवाक् पश्चा,दुदक्पुरः ॥ १ ॥
नीलः श्वेतः शृङ्गवांश्च गताः पश्चिम-गोलके ।
वर्षाणां रम्यकादीनां क्रमादुत्तरतः स्थिताः ॥ २ ॥
निषधो हेमकूटश्च हिमवान्पूर्वगोलके ।
हरिकिन्नरनाभीनां क्रमादुत्तरतः स्थिताः ॥ ३ ॥

माल्यवान् पर्वतो यस्तु केतुमाल-विभाजकः ।
गन्धमादननामा तु भद्राश्वस्य विभाजकः ॥ ४ ॥

अथ सुमेरुः—

सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः, ।
इत्येवं नियमाद्विद्धि मेरुं भूगोल- कर्णिकाम् ॥ ५ ॥
सुरालयः सुवर्णाद्रिर्मनुष्याणामगोचरः ।
मुनिभिर्वर्णितस्तस्मान्न मृत्पाषाण-पिण्डकः ॥ ६ ॥
सुमेरुशिखरे गङ्गा चतुर्धा जायते ततः ।
गिरिं गिरिं लङ्घयन्ती हिमाद्रिं भारतं, तथा ॥ ७ ॥
भद्राश्ववर्षं सीता च गन्धमादन-पर्वतात् ।
माल्यवत्पर्वताच्चक्षुः केतुमालं तथा गताः ॥ ८ ॥
शृङ्गवत्पर्वताद् भद्रा, यात्युत्तरकुरूँस्तथा ।
ब्रह्मलोकादागताया गङ्गाया विभजितः ॥ ९ ॥
सुमेरुशिखरे प्रोक्ता सा सूक्ष्मा नात्र विस्मयः ।
प्रत्यक्षा त्वस्मदादीनां मर्यादागिरिषुस्मृता ॥ १० ॥

तथा च विष्णुपुराणे—

भरताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ।
पत्राणि लोकपद्मस्य मर्यादाशैलवाह्यत—इति ॥
पूर्वोक्तांश्चतुरो विद्धि मर्यादा-गिरिनामकान् ।
यस्मादलौकिकञ्चापि पुराणेषु समीरितम् ॥ ११ ॥
लौकिकाऽलौकिकत्वेन द्विधा सृष्टिः प्रकीर्तिता ।
लौकिका सर्वप्रत्यक्षा योगिगम्या त्वलौकिका ॥ १२ ॥
एवं प्लक्षादयोद्वीपा ब्रह्माण्डाऽऽवरणात्मकाः ।
पृथिवी-जल-तेजांसि वाताऽऽकाशाऽवहङ्कृतिः ॥ १३ ॥

महतत्त्वं प्रधानञ्च ब्रह्माण्डावरणानि हि ।
पूर्वो व्याप्यो व्यापकस्तु परो तस्मादतः स्मृतम् ॥ १४ ॥
उत्तरोत्तरमेतेषां माने दशगुणाधिकम् ।
चैतन्याधिष्ठितं सर्वं ध्येयत्वेन निरूपितम् ॥ १५ ॥
विराट्स्वरूपं ब्रह्माण्डं सत्यान्तं मुनिभिः स्मृतम् ।
सूर्यप्रकाशो गोलस्तु महर्लोकान्तमेव हि ॥ १६ ॥
जनस्तपः सत्यलोकाः स्व-प्रकाशाः समीरिताः ।
पाताललोकाः पृथवी-पुटानीति निरूपितम् ॥ १७ ॥
नागादिवासो मणिभिः प्रकाशस्तेषु कीर्त्तितः ।

इति प्रकीर्णप्रकरणम् ।

अथ पर्वताः ।

पर्वतास्तु त्रिधा भूमौ सौम्या आग्नेयकाः समाः ॥ १८ ॥
शीताः सौम्यास्तापकरा आग्नेयाः शेषकाः समाः ।
हिमेनाच्छादिताः सौम्याः तरुच्छन्नाः समामताः ॥ १९ ।
शिलोच्चया स्तापकरा विन्ध्य-पूर्वाद्रि-पर्वताः ।
उदग्विषुरेखाया नवांशे मेलयो गिरिः ॥ २० ॥
द्वाविंशांशाद्विन्ध्यागिरिः सप्तविंशाद्धिमालयः ।
हिमालयो घर्घरान्तो गिरिः पूर्वापरायतः ॥ २१ ॥
वाव्याभिमुखस्तस्मात्कश्मीरान्तं गतो महान् ।
व्याप्तमेकादशांशेषु दिविष्ठोत्सङ्गशोभिना ॥ २२ ॥
उच्चैः पर्वतराजेनाऽलौकिकं भूतलं कृतम् ।
दक्षिणाऽमेरिकास्थोऽपि शृङ्गवानुन्नतो गिरिः ॥ २३ ॥
याम्योत्तरायतश्चत्वा,रिंशन्नल्वोऽस्य कूटकः ।
विषुवत्सन्निधेऽप्यस्मिन हिमोऽस्ती न विस्मयः ॥ २४ ॥
त्रिंशन्नल्वोच्छ्रितः क्वपि गिरिर्हिम-युतोभवेत् ।
हिमालयस्य कूटस्तु पञ्चाशन्नल्वकोन्मितः ॥ २५ ॥
ऐव्रिष्ट, कूट-इयुक्तस्तन्नाम्ना मापितो यतः ।
निरूपयिष्ये ऽन्यान् कूटान् भारतस्य निरूपणे ॥ २६॥

इतिप्रथमोऽध्यायः

# भगवद्विभूति-ग्रन्थमालायां निर्मितानि,
# पुस्तकानि।

| | |
|---|---|
| श्रीसूर्यचरितं महाकाव्यम् ( मुद्रितम् ) मू०— ... .... | १।) |
| गोलविद्या, गोलसूत्रञ्च, ( मुद्रितम् ).... ... ... | ॥) |
| भारतवर्ष-भूगोलः, ( श्लोक-बद्धः )... .... .... | ॥) |
| ( आर्या-प्रवाहः ) पण्डित-गुरु-परम्परा-वर्णनं— ... .... | १) |
| दाशरथि-भरत चरितं नाटकं ( सप्ताङ्कम् ) ... ... | १।) |
| भारतोद्धारः, प्रत्येकाध्यायस्य मूल्यम्—... ... .... | ।) |
| इन्द्रियार्थ-मीमांसा ( गद्यमयी )···· ... .... | ।) |
| सौवरः ( स्वरमीमांसा ) गद्यमयः—... ... ... | ।) |
| वर्णमाला—सूत्रम् , भाषा टीका सहितम्— ... ... | =) |
| पाञ्चभौतिकम् ( दार्शनिकम् )... ... ... ... | ॥) |

प्राप्ति स्थानम्—

( १ ) अर्जुनराम योधराज—
संस्कृत-पाठशाला, काशी।

( २ ) तारादत्त पन्तः, रणवीर
संस्कृत पाठशाला, काशी।

( ३ ) बा हरि कृष्ण दास गुप्तः—
कचौड़ी गली, काशी।

( ४ ) शारदा—भवनम् , काशी।

( ५ ) सुप्रभात कार्यालयः काशी।

( ६ ) गौरीशंकर शर्मा, भास्कर पुस्तकालय-ठठेरीबाजार काशी।